प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ॥

सहस्रदळमण्टपमध्ये सहस्रदळपद्मास्थिताय नानावर्णाय मोक्षशक्तिसहिताय श्रीगुरवे नमः, सहस्रमजपागायत्रीजपं निवेदयामि ॥ नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥ हंसहंसाय विद्महे परमहंसाय धीमहि तन्नो हंसः प्रचोदयात् ॥ (इति निवेद्य)

अद्य सूर्योदयमारभ्य श्वः सूर्योदयपर्यन्तमजपागायत्रीजपमहं करिष्ये ।

अस्य श्री अजपागायत्रीमहामन्त्रस्य परमहंस ऋषिः, अव्यक्तगायत्री छन्दः परमहंसो देवता । हं बीजम्, सः शक्तिः, सोहं कीलकम् । मम अजपागायत्रीप्रसादसिद्ध्यर्थे जपे विनियोगः ।

हंसहंसाय विद्महे अङ्गुष्ठाभ्यां नमः । परमहंसाय धीमहि तर्जनीभ्यां नमः । तन्नो हंसः प्रचोदयात् मध्यमाभ्यां नमः । हंसहंसाय विद्महे अनामिकाभ्यां नमः । तन्नो हंसः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः ।

भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्–

अग्नीषोमगरुद्द्वयं प्रणवकं बिन्दुत्रिणेत्रोज्ज्वलं
भास्वद्रुद्रमुखं शिवांघ्रियुगलं कालाग्निबाहुद्वयम् ।
उद्यद्भास्करकोटिकोटिसदृशं हंसं जगद्व्यापकं
नादब्रह्ममयं हृदम्बुजपुटे नीडे सदा भावयेत् ॥

लमित्यादि पञ्चपूजा ।

हंसो गणेशो विधिरेष हंसो हंसो हरिः शंभुमयोऽपि हंसः ।
जीवोऽपि हंसो गुरुरेव हंसश्चात्माऽपि हंसः परमात्महंसः ॥

हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ॥

इति यथाशक्ति जपित्वा, हंसः इति विंशतिवारं जपेत् ॥

भूप्रार्थना

समुद्रवसने देवि पर्वतस्तनमण्डिते ।

विष्णुपत्नि नमस्तुभ्यं पादचारं क्षमस्व मे ॥

ரச்மிமாலை அஜபாகாயத்திரி பூ பிரார்த்தனை ஆனபிறகு வெளியில் வந்து தந்ததாவனதி, கௌசாதிவைதிக ரீதியாக சந்தியாவந்தனாதி கிரியைகளெல்லாம் முடித்துக்கொண்டு பிறகு ஒரு பாத்திரத்தில் ஜலத்தை எடுத்துக்கொண்டு அதில் பச்சைகற்பூரம் ஏலப்பொடிபோட்டு கலக்கி மாயாபீஜமான (ह्रीं) என்று உச்சரித்து ஆதி லலிதாம்பிகையை உத்தேசித்து 12 அர்க்கியம் கொடுத்த பிறகு அதேஜலத்தினால் மூலமந்திரத்தை உச்சரித்துக்கொண்டு 12 அர்க்கியம் மறுபடியும் ஆதி பரா சக்தியை உத்தேசித்து விடவும், பிறகு ஜபம் செய்யவேண்டியது.

जपविधिः

पूर्ववत् प्राणानायम्य

यथा—

अस्य श्रीमहात्रिपुरसुन्दरीपञ्चदशाक्षरीमहामन्त्रस्य ३ आनन्दभैरवाय ऋषये नमः—शिरसि । ३ पङ्क्त्यै छन्दसे नमः—मुखे । ३ श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः—हृदि । ३ ऐं बीजाय नमः—गुह्ये । ३ सौः शक्तये नमः—पादयोः । ३ क्लीं कीलकाय नमः—नाभौ । ३ (उक्तबीजशक्तिकीलकानि नाभिगुह्यपादेषु प्रायशो न्यस्तव्यानीति, मूलविद्याखण्डत्रयेणापि न्यस्तव्यानीति च केषांचिदभिमतम्) ३ श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः—करसम्पुटे ॥

ऐं ह्रीं श्रीं मूलविद्यया सर्वाङ्गे त्रिः व्यापकम् ।

३ क ए ई ल ह्रीं अङ्गुष्ठाभ्यां नमः । हृदयाय नमः ॥

३ ह स क ह ल ह्रीं तर्जनीभ्यां स्वाहा । शिरसे स्वाहा ॥

३ स क ल ह्रीं मध्यमाभ्यां वषट् । शिखायै वषट् ॥
३ क ए ई ल ह्रीं अनामिकाभ्यां हुं । कवचाय हुम् ॥
३ ह स क ह ल ह्रीं कनिष्ठिकाभ्यां वौषट् । नेत्रत्रयाय वौषट् ॥
३ स क ल ह्रीं करतलकरपृष्ठाभ्यां फट् । अस्त्राय फट् ॥

भूर्भुवस्सुवरों इति दिग्बन्धः ।

ध्यायेत् कामेश्वराङ्कस्थां कुरुविन्दमणिप्रभाम् ।
शोणाम्बरस्रगालेपां सर्वाङ्गीणविभूषणाम् ॥
सौन्दर्यशेवधिं सेषुचापपाशाङ्कुशोज्ज्वलाम् ।
स्वभाभिरणिमाद्याभिः सेव्यां सर्वनियामिकाम् ॥
सच्चिदानन्दवपुषं सदयापाङ्गविभ्रमाम् ।
सर्वलोकैकजननीं स्मेरास्यां ललिताम्बिकाम् ॥

लमित्याति पंचपूजा कत्वा मूलं जपित्वा ।

---

# ॥ श्रीमहात्रिपुरसुन्दरीकवचम् ॥

श्रीदेव्युवाच—

भगवन् देवदेवेश लोकानुग्रहकारक ।
यदुक्तं मे महादेव कवचं सुन्दरीप्रियम् ॥
तन्मे कथय देवेश यदि स्नेहोऽस्ति मां प्रति ।

श्रीमहादेव उवाच—

शृणु देवि प्रवक्ष्यामि कवचं मन्त्रविग्रहम् ।
सर्वार्थसाधकं देवि सर्वसम्पत्तिपूरकम् ॥

अस्य श्रीमहात्रिपुरसुन्दरीमन्त्रवर्णात्मककवचमहामन्त्रस्य दक्षिणामूर्तिर्भगवान् ऋषिः अनुष्टुप् छन्दः श्रीमहात्रिपुरसुन्दरी देवता । ऐं बीजम् । सौः

शक्तिः । क्लीं कीलकम् । मम शरीररक्षणार्थे जपे विनियोगः । ह्रामित्यादि करहृदयन्यासः ॥

॥ ध्यानम् ॥

बालार्कमण्डलाभासां चतुर्बाहां त्रिलोचनाम् ।
पाशाङ्कुशधनुर्बाणां धारयन्तीं शिवां भजे ॥

लमित्यादि पञ्चपूजा ऐं ह्रीं श्रीं योन्या प्रणम्य—

ककारः पातु मे शीर्षं एकारः पातु फालकम् ।
ईकारः पातु मे वक्त्रं लकारः पातु कर्णकम् ॥

ह्रीकारः पातु हृदयं वाग्भवश्च सदाऽवतु ।
हकारः पातु जठरं सकारो नाभिदेशकम् ॥

ककारोऽव्याद्वस्तिभागं हकारः पातु लिङ्गकम् ।
लकारो जानुनी पातु ह्रीङ्कारो जङ्घयुग्मकम् ॥

कामराजस्सदा पातु जठरादिप्रदेशकम् ।
सकारः पातु मे जङ्घे ककारः पातु पृष्ठकम् ॥

लकारोऽव्यान्नितम्बं मे ह्रीङ्कारः पातु मूलकम् ।
शक्तिबीजस्सदा पातु मूलाधारादिदेशकम् ॥

त्रिपुरा देवता पातु त्रिपुरेशी च सर्वदा ।
त्रिपुरा सुन्दरी पातु त्रिपुरा श्रीस्तथाऽवतु ॥

त्रिपुरा मालिनी पातु त्रिपुरा सिद्धिदाऽवतु ।
त्रिपुराम्बा तथा पातु पातु त्रिपुरभैरवी ॥

अणिमाद्यास्तथा पातु ब्राह्मयाद्याः पान्तु मां सदा ।
दशमुद्रास्तथा पान्तु कामकर्षणपूर्विकाः ॥

पान्तु मां षोडशदळे यन्त्रेऽनङ्गकुमारिकाः ।
पान्तु मां पृष्ठपत्रे तु सर्वसंक्षोभणादिकाः ॥

पान्तु मां दशकोणे तु सर्वसिद्धिप्रदायिकाः ।
पान्तु मां बाह्यदिक्कोणके तथा ॥
सर्वज्ञाद्यास्तथा पान्तु सर्वाभीष्टप्रदायिकाः ।
वशिन्याद्यास्तथा पान्तु वसुपत्रस्य देवताः ॥
त्रिकोणस्यान्तराळे तु पान्तु मामायुधानि च ।
कामेश्वर्यादिकाः पान्तु त्रिकोणे कोणसंस्थिताः ॥
बिन्दुचक्रे तथा पातु महात्रिपुरसुन्दरी ।
पुनर्न्यासादियोनिमुद्रया प्रगानान्तं कृत्वा श्रीं ह्रीं ऐं ओं—
इतीदं कवच देवि कवचं मन्त्रसूचकम् ।
यस्मै कस्मै न दातव्यं न प्रकाश्यं कथञ्चन ॥
यस्त्रिसन्ध्यं पठेद्देवि लक्ष्मीस्तस्य प्रजायते ।
अष्टम्यां च चतुर्दश्यां यः पठेत् प्रयतस्सदा ॥
प्रसन्ना सुन्दरी तस्य सर्वसिद्धिप्रदायिनी ।
इति श्रीरुद्रयामले तन्त्रे त्रिपुराहृदये कवचरहस्यं सम्पूर्णम् ॥

---

# ॥ देवीखड्गमालास्तोत्रम् ॥

(श्लो) ह्रींकारासनगर्भितानलशिखां सौः क्लीं कळां बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतां त्रिणेत्रोज्ज्वलाम् ।
वन्दे पुस्तकपाशमङ्कुशधरां स्रग्भूपितामुज्ज्वलां
त्वां गौरीं त्रिपुरां परात्परकळां श्रीचक्रसंचारिणीम् ॥

अस्य श्रीशुद्धशक्तिमालामन्त्रस्य, उपस्थेंद्रियाधिष्ठात्री वरुणादित्यऋषिः देविगायत्री च्छन्दः, सात्विकककारभट्टारकपीठस्थितकामेश्वराङ्कनिलया महा-कामेश्वरी श्रीललिता भट्टारिकादेवता, ऐम् बीजं, क्लीं शक्तिः, सौः कीलकं, मम खड्गसिद्ध्यर्थे, सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः। मूलमन्त्रेण षडङ्गन्यासं कुर्यात्॥

* ॥ ध्यानम् ॥ *

तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै ।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति ॥

आरक्ताभां त्रिणेत्रा मरुणिमवसनां रत्नताटङ्करम्यां
हस्ताम्भोजैस्सपाशाङ्कुश मदनधनु स्सायकैर्विस्फुरन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारोज्जवलाङ्गीं
ध्यायेदम्भोरुहस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ॥

लं इत्यादि पञ्चपूजां कुर्यात् - यथाशक्तिमूलमन्त्रं जपेत् ॥

**ओं ऐं ह्रीं श्रीं, ओं नमस्त्रिपुरसुन्दरि, ।**

**हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेव्यस्त्रदेवि, आस्यदेवि कामेश्वरि, भगमालिनि, नित्यक्लिन्ने, भेरुण्डे, भेह्निवासिनि, महावज्रेश्वरि, विद्येश्वरि, परशिवदूति, त्वरिते, कुलसुन्दरि, नित्ये, नीलपताके, विजये, सर्वमङ्गळे, ज्वालामालिनि, चित्रे. महानित्ये, ।**

परमेश्वरपरमेश्वरि, मित्रेशमयि, मन्त्रेशमयि, षष्टीशमय्युड्डीशमयि, उड्याणमयि, चर्यानाथमयि, लोपामुद्रामय्यगस्त्यमयि, कालतापनमयि, धर्माचार्यमयि, मुक्तकेशीश्वरमयि, दीपकलानाथमयि, विष्णुदेवमयि, प्रभाकरदेवमयि, तेजोदेवमयि, मनोजदेवमयि, कल्याणदेवमयि, रत्नदेवमयि, वासुदेवमति, ।

श्रीरामानन्दममय्यणिमासिद्धे, लघिमासिद्धे, गरिमासिद्धे, महिमासिद्धे, ईशित्वसिद्धे, वशित्वसिद्धे, प्राकाम्यसिद्धे, भुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे, रससिद्धे, मोक्षसिद्धे ।

ब्राह्मि, माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे, महालक्ष्मी, ।

सर्वसंक्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्ववशंकरि, सर्वोन्मादिनि, सर्वमहाङ्कुशे, सर्वखेचरि, सर्वबीजे, सर्वयोने, सर्वत्रिखण्डे, सर्वास्त्रखण्डिणि, त्रैलोक्यमोहनचक्रस्वामिनि, प्रकटयोगिनि, बौद्धदर्शनाङ्गि, ।

कामाकर्षणि, बुद्ध्याकर्षण्यहंकाराकर्षणि, शब्दाकर्षणि, स्पर्शाकर्षणि, रूपाकर्षणि, रसाकर्षणि, गन्धाकर्षणि, चित्ताकर्षणि, धैर्याकर्षणि, स्मृत्याकर्षमि, नामाकर्षणि, बीजाकर्षण्यात्माकर्षण्यमृताकर्षणि, शरीराकर्षणि, सर्वाशापरिपूरक-चक्रस्वामिनि, ।

गुप्तयोगिन्यनङ्गकुसुमेऽनङ्गमेखलेऽनङ्गलेखेऽनङ्गमदनेऽनङ्गमादिनिऽनङ्ग-मदनातुरेऽनङ्गरेखेऽनङ्गवेगिन्यनङ्गाङ्कुशेऽनङ्गनालिनि, सर्वसंक्षोभणचक्रस्वामिनि, गुप्ततरयोगिनि, वैदिकदर्शनाङ्गि, पूर्वाम्नायादिदेवते, सृष्टिरूपे, ।

सर्वसङ्क्षोमिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्वाह्लादिनि, सर्वसंमोहिनि, सर्वस्तंभिनि, सर्वजृंभिनि, सर्ववशङ्करि, सर्वरञ्जिनि, सर्वोन्मादिनि, सर्वार्थसाधिनि, सर्वसंपत्तिपूरणि. सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयङ्करि, सर्वसौभाग्यदायकचक्रस्यामिनि, संप्रदाययोगिनि, सौरदर्शनाङ्गि, ।

सर्वसिद्धिपदे, सर्वसंपत्प्रदे, सर्वप्रियङ्करि, सर्वमङ्गलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचिनि, सर्वमृत्युप्रशमनि, सर्वविघ्ननिवारिणि, सर्वाङ्गसुन्दरि, सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि, कुलोत्तीर्णयोगिनि, ।

सर्वज्ञे, सर्वशक्ते, सर्वैश्वर्यप्रदे, सर्वज्ञाममयि, सर्वव्याधिविनाशिनि, सर्वाधारस्वरूपे, सर्वपापहरे, सर्वानन्दमयि, सर्वारक्षास्वरूपिणि, सर्वेप्सितप्रदे, सर्वेप्सितफलप्रदे, सर्वरक्षाकरचक्रस्वामिनि, नियोगिनि, निगर्भयोगिनि, वैष्णव-दर्शनाङ्गि, दक्षिणाम्नायेशि, स्थितिरूपे, ।

वशिनि, कामेश्वरि, मोदिनि, विमलेऽरुणे, जयिनि, सर्वेश्वरि, कौलिनि, सर्वरोगहरचक्रस्वामिनि, रहस्ययोगिनि, रहस्यगोपिनि, रहस्यभोगिनि, शाक्तदर्शनाङ्गि, पश्चिमाम्नायेशि, ।

बाणिनि, चापिनि, पाशिन्यङ्कुशिनि. महाकामेश्वरि, मावज्रेश्वरि, महाभगमालिनि, महाश्रीसुन्दरि, सर्वसिद्धिप्रदचक्रस्वामिनि, अतिरहस्ययोगिनि. शैवदर्शनाङ्गि, ।

श्रीश्रीमहाभट्टारिके, सर्वानन्दमयचक्रस्वामिनि, उत्तराम्नायेशि संहाररूपे, शुद्धपरे, बिन्दुपीठगते, परापररहस्ययोगिनि, शांभवदर्शनाङ्गि, ।

त्रिपुरे, त्रिपुरेशि, त्रिपुरसुन्दरि, त्रिपुरवासिनि, त्रिपुराश्री, त्रिपुरमालिनि, त्रिपुरासिद्धे, त्रिपुरांब, महात्रिपुरसुन्दरि, महात्रिपुरभैरवी, सर्वचक्रस्थे, अनुत्तराम्नायाख्यस्वरूपे, चतुर्विधगुणरूपे, कुले, अकुले, कुलाकुले, महाकौलिनि, सर्वोत्तरे, सर्वदर्शनाङ्गि, नवासनस्थिते, नवाक्षरि, नवमिथुनाकृते, महेशमाधवविधातृमन्मथस्कन्दनन्दीन्द्रमनुचन्द्रकुबेरागस्त्यदुर्वासक्रोधभट्टारिकविद्यात्मिके, कल्याणतत्वत्रयरूपे, शिवशिवात्मिके, पूर्णब्रह्मचक्रे, महापरमेश्वरि, ।

महामाहेश्वरि, महामहाराज्ञि, महामहाशक्ते, महामहागुप्ते, महामहाज्ञप्ते, महामहानन्दे, महामहास्पन्दे, महामहाशये, महामहाश्रीचक्रनगरसंराज्ञि, नमस्ते, नमस्ते, नमस्ते, श्रीमहात्रिपुरसुन्दरि तव श्रीपादुकां पूजयामि नम, $\frac{\text{मूलम्}}{15}$ श्रीं ह्रीं ऐं ॥



ओं श्रीगुरुभ्यो नमः ॥
ओं श्रीगणेशय नमः ॥
ओं श्रीगोमत्यै नमः ॥
ओं महाकाल्यै नमः ॥
ओं श्री ललितामहात्रिपुरसुन्दर्यै नमः ।

## ॥ श्री विद्या पूजाक्रमम् ॥

प्रथमः खण्डः ।

गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥

என்னும் பிரமாணப்படி ஆதி மாஹாமாயா ஸ்வரூபிணியாகிய ஸ்ரீ லலிதாபரமேஸ்வரி ஒவ்வொரு அணுவிலும் உள்ளும் புறமும் சக்தி ரூபமாய் வியாபித்து இருக்கிறபடியால் எந்த தெய்வத்தை பூஜித்தாலும் ஸ்தோத்திரம் செய்வதாலும் அவளையே அடைகின்றது. என்று ருத்ரயாமளதில் சொல்லப்பட்டிருக்கிறது. ஆகையால் இப்புஸ்தகத்தில் பக்கம் 1 முதல் 19 பக்கம் வரையில் ஸ்தோத்திரம் சொல்லப்பட்டிருக்கிறது, அதை ஸ்தோத்திரம் செய்து பிறகு அவர் அவர்களுடைய குலதெய்வத்தை மானஸீகமாக ஷோடசோபசாரம் செய்த பிறகு பூஜை ஆரம்பித்தால் சீக்கிரம் சித்திகைகூடிவரும் இது ருத்ரஸாஸநம்.

இந்த பூஜைக்கு யாகம் என்று மற்றொரு பெயர் உண்டு. பூஜை ஆரம்பிக்கும் முன் பாத்திரஸாதனம் இதில் சொல்லப்பட்ட யந்திரத்தைப்போட்டு அதன் மேல் பாத்திரத்தைவைத்து, அந்தந்த யந்திரங்களுக்கும் பாத்திரங்களுக்கும் சந்தனம், குங்குமம், புஷ்பம், அக்ஷதைகளால் அலங்காரம் செய்தபிறகு பூஜை செய்யவேண்டியது பூஜை செய்யவேண்டிய இடத்தில் கோமயத்தால் மொழுகி கோலமிட்டு, அதன் மேல் $1\frac{1}{2}$ அடி அகலம், 2 அடி நீளமுள்ள பலகையைவைத்து அதற்கும் கோலமிட்டு பூஜா திரவியங்கள் எல்லாம் சேகரித்தபிறகு பூஜை ஆரம்பிக்கவேண்டியது.

மத்ஸ்யமுத்திரை என்பது. எந்தநாடி மூச்சு பிரஸரிக்கின்றதோ அந்த பக்கத்து உள்ளங்கையை கவிழ்த்து அதன் மேல் மற்ளுெரு உள்ளங்கையை கவிழ்த்து இருபுறங்களிலு முள்ள இரண்டு கட்டைவிரல்களையும் மீனின் இறகுகள் போல சலிக்கச்செய்து மற்ற விரல்களை சேர்த்து பொருத்தி கீழ்கை மோதிர விரலால் எழுதுவது

1. மணி
2. वर्धनीकलशम् ॥
बिन्दुत्रिकोणम्
षट्कोणं वृत्तं चतुरश्रं

| VI | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| IV | | II | I | III | | V | | | |
| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 |

अष्टारं मत्स्यमुद्रया निर्माय ॥ இந்த யந்திரம் போட்டு அதன் மேல் ஒரு பாத்திரத்தை வைத்து முக்கால் பாகம் சுத்த ஜலம் விட்டு, ⅛ பாகம் தேன் ⅛ பாகம் பசுவின் பால் விட்டு அத்துடன் சந்தனம், கற்கண்டு, ப. கற்பூரம், கோரோசனை கஸ்தூரி, குங்குமப்பூ, ஏலப்பொடி இவைகளைக் கலக்கிவைக் கவும் இந்த ஜலம் ஆசாமனீயத்துக்கும் ப்ரோக்ஷணத்துக் கும். அர்க்கியம் கொடுக்கவும் உபயோகம்

श्रीपात्रं बिन्दुत्रिकोण चतुरश्रं मत्स्यमुद्रया निर्माय ॥ இந்த யந்தரத்தை 3 என்கிற இடத்தில் எழுதி அதன் மேல் ஒரு பாத்திரத்தை வைத்து கொஞ்சம் தேன் இஞ்சித்துண்டு போட்டுவைக்கவும் பூஜை முடிந்தவுடன் சுவாஸினீ பூஜை செய்யப்படும் போது உபயோகப்படும் பாத்திரம்.

मधु அக்னிதத்வம் बिन्दु-त्रिकोणं वृत्तं चतुश्रंमत्स्यमुद्रया विलिख्य இதை 4 என்கிற இடத்தில் எழுதி அதன் மேல் ஒரு பாத்திரத்தைவைத்து ⅛ சேர் தேன் விடவும்.

माषापूपं ॥ பிரதிவீதத்வம் बिन्दु-त्रिकोणं वृत्तं चतुरश्रं मत्स्यमुद्रया विलिख्य 5 என்கிற இடத்தில் எழுதி அதன் மேல் ஒரு பாத்திரத்தைவைத்து அதில் ஒன்பது உளுந்து வடையை வைக்கவேண்டும். வடைக்கு போடவேண்டிய சாமான் 1 உளுந்து, 2 உப்பு, 3 கருவேப்பிலை, 4 காயம், 5 மிளகு, 6 மஞ்சள் சேர்த்து அரைத்து வடையாக தட்டவேண்டியது.

नागरं ஜலதத்வம் बिन्दु-त्रिकोणं वृत्तं चतुरश्रं मत्स्यमुद्रया विलिख्य இந்த யந்தரத்தை 6 என்கிற இடத்தில் எழுதி அதில் ஒரு பாத்திரத்தைவைத்து ஒரு பெரிய இஞ்சிதுண்டைபோடவும்.

भृङ्गी शुद्धमूलिका ॥ बिन्दु-त्रिकोणं वृत्तं चतुरश्रंमत्स्यमुद्रया विलिख्य இதை 7 என்கிற இடத்தில் வைத்து சுத்தமூலிகையை வைக்கவேண்டியது.

सामान्यर्घ्यं ॥ शङ्खं ॥ बिन्दु-त्रिकोणं चतुरश्रं मत्स्यमुद्रया विलिख्य இந்த யந்தரத்தை போட்டு, அதன் மேல் ஒரு சங்கை வைக்கவும், இந்த சங்கம் பூஜை முடிவு வரையிலும் யாதொரு காரணத்தைக் கொண்டும் அசைக்கக்கூடாது.

विशेषार्घ्यं ॥ बिन्दु-त्रिकोणं षट्कोणं वृत्तं चतुरश्रं मण्डलं मत्स्यमुद्रया विलिख्य இதை 9 என்கிற இடத்தில் எழுதி அதன் மேல் 2 சேர் கொள்ளும்படியாக பாத்திரத்தைவைத்து ½ பாகம் சுத்த ஜலம் விட்டு ⅛ பாகம் தேனும் ⅛ பாகம் பசுவின் பாலும் விட்டு இத்துடன் 1 சந்தனம், 2 கற்கண்டு, 3 ஏலப்பொடி, 4 பச்ச கற்பூரம், 6 கஸ்தூரி, 7 கோரோசனை, 7 குங்குமபூவுடன் அஷ்டகந்தமும் போடவேண்டும் அஷ்டகந்தம் என்பது 1 குங்குமம், 2 கோரோசனை, 3 கஸ்தூரி, 4 சந்தனம், 5 தேவதாரு, 6 தக்கேலம், 7 பச்சகற்பூரம், 8 ஜடாமாஞ்சி, இந்த எட்டையும் நன்ருக பொடி செய்து வஸ்தரகாயம் செய்து இதில் கொஞ்சம் விசேஷார்யத்தில் போடவேண்டியது.

गुरुपात्रं बिन्दु-त्रिकोणं वृत्तं चतुरश्रं मत्स्यमुद्रया विलिख्य இதன் மேல் ஒரு சிறு பாத்திரத்தை வைக்கவேண்டியது. இது பூஜை முடிந்து சுவாஸிநீ பூஜை முடிந்தவுடன் குருவை பூஜிக்கும் போது உபயோகப்படும் आत्मपात्रं बिन्दु-त्रिकोणं चतुरश्रं मत्स्यमुद्रया विलिख्य இதன் மேல் ஒரு சிறு பாத்திரத்தை வைக்கவேண்டும். குருபூஜை முடிந்தவுடன் நாம் உபயோகப்படுத்தும் பாத்திரம்.

மேலே குறிக்கப்பட்ட பாத்திர ஸாதனங்கள் என்னுடைய குருவிஞல் உபதேசிக்கப்பட்டது. இந்த பூஜை செய்கிறவாகள் அவரவர் குரு சம்பரதாயப்படி பாத்திரங்கள் மாத்தி வைத்துக்கொள்ளவும்.

தீபஸ்தாபனம் I என்கிற இடத்தில் 5 முக குத்து விளக்கோ அல்லது ஜோதி விளக்கோ வைத்து அதன் அடி

யில் ஸ்ரீசக்ரத்தை வைத்து பூஜை செய்யவேண்டியது. II என்கிற இடத்தில் ஒரு ஜோதி விளக்கை வைத்து அதன் அடியில் ஸ்ரீ ராஜ மாதங்கி சக்ரத்தை வைக்கவும்.

बिन्दु त्रिकोण पञ्चकोण अष्टदल षोडशदल अष्टपत्र चतुष्पत्र चतुरस्रात्मकं चक्रं विलिख्या ॥ வைக்கவேண்டியது III என்கிற இடத்தில் ஒரு ஜோதி விளக்கைவைத்து அதன் அடியில் மஹாவராஹி யந்தரத்தைதவைக்கவும். नूपुरत्रय-सहस्रपत्र शतपत्राष्टपत्रषडापञ्चाश्र्यस्र बिन्दुमये चक्रे வைத்து பூஜை செய்யவேண்டியது. IV V என்கிற இடத்தில் இரண்டு சின்ன ஜோதி விளக்குகள் வைக்கவும். அதன் அடியில் बिन्दु-त्रिकोणं वृत्तं चतुरश्रं मत्स्यमुद्रया विलिख्य ॥ இந்த இரண்டு தீபங்களும் சாக்ஷி தீபங்கள் என்று பெயர். IV என்கிற இடத்தில் நல்லெண்ணை சிகப்பு திரி போட்டு ஏற்றிவைக்கவும் V என்கிற இடத்தில் நெய்யும் வெள்ளை திரியும் போட்டு ஏற்றிவைக்கவும், ஆனால் பூஜை பாத்திரங்கள் என்னென்ன பூஜைக்கு வேண்டியதோ அவைகள் எல்லாம் இந்த இரண்டு தீபங்களுக்குள் அடங்கி இருக்கவேண்டியது நாம் பூஜைசெய்யும் போது ஸ்ரீசக்ரத்தை பார்த்து உட்கார்ந்து பூஜை செய்யவும் ஜோதி விளக்கு ஸ்ரீசக்ரம் விசேஷார்க்யம் எல்லாம் ஒரே லயனில் இருக்கவேண்டியது.

VI என்கிற இடத்தில் ஒரு சின்ன குத்துவிளக்கைவைக்கவும் இதில் ஊதுவத்தி கொழுத்த தீபஹாரத்தி கற்பூர ஹாரத்தி ஏற்றிக்கொள்ள உபயோகப்படும். இந்த விளக்கை ஏற்றிவைத்த பிறகுதான் பூஜை ஆரம்பிக்கவேண்டும் இந்த விளக்கு ஏற்றிவைப்பதற்கு முன் இதற்கும் மற்ற விளக்குகளுக்கும் சந்தனம், குங்குமம், புஷ்பம், அக்ஷதை அலங்கரிக்கவும் மற்ற விளக்குகள் இப்போது ஏற்றவேண்டியதில்லை அந்தந்த பூஜை ஆரம்பிக்கும் போது ஏற்றிக் கொள்ளலாம்.

தேவதா ஸ்தாபனம் ஸ்ரீ சக்கரத்திற்கு தென்மேற்கு திக்கில் கணபதியையும் சுப்பிரமணியமும் வடமேற்கு திக்கில் சூரியனையும் வடகிழக்கு திக்கில் மஹாவிஷ்ணு ஸ்ரீ ராமர் ஸ்ரீ கோபாலகிருஷ்ணனையும் தென்கிழக்குதிக்கில் மஹா தேவனையும் வைத்து பூஜிக்கவேண்டியது.

---

श्री गणेशाय नमः ॥

श्री ललीतामहात्रिपुरसुन्दर्यै नमः ॥

लक्ष्मीकराम्भोरुहहेमकुम्भपीयूषपूरैरभिषिक्तशीर्षम् ।
व्याख्याक्षमालाम्बुजपुस्तकानि हस्तैर्वहन्तं हयतुण्डमीडे ॥

अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते मन्दयितुं क्षमन्ते ॥

मनोगतं पश्यति यस्सदा त्वां मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः निष्कुर्वते तस्य गिरो यथार्हम् ॥

## आत्मरक्षणं ।

अग्रतोमे अंबिकापातु पार्वतीपातुपृष्ठतः ।
वाराहीविषमेमार्गे दुर्गे दुर्गेषु कर्हिचित् ॥

कालिका कलहेघोरे पातुमां परमेश्वरी ।
मण्डपे तत्रमातङ्गी तथासौम्या स्वयंपरे ॥

भवानी यूपमध्येतु पातुमां भवमोचनी ।
गिरिजा गिरिदुर्गेषु चामुण्डा चत्वरेषुच ॥
कामगाकाननेष्वेवं रक्षंतुमां सनातनी ॥

विवादे वैष्णवी शक्तिः अवतन्मां रघूद्वह ।
भैरवीं चरणे सौंय शत्रूणां वै समागमे ॥

सर्वदा सर्वदेशेषु पातुमां भुवनेश्वरी ।
महामाया जगद्धात्री सच्छिदानन्द रूपिणी ॥

प्रजनने ब्रह्मा तिष्ठतु । पादयो-र्विष्णुस्तिष्ठतु । हस्तयो-र्हरस्तिष्ठतु । बाह्वो-रिन्द्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । हृदये कामेश्वरी कामेश्वरौ स्तिष्टेताम् । कण्ठवसवस्ति ष्ठंतु । वक्त्रे सरस्वती तिष्ठतु । नासिकयो र्वायुस्तिष्ठतु । नयनयो-

श्चन्द्रादित्यौ तिष्ठेताम्। कर्णयोरश्विनौ तिष्ठेताम्। ललाटे रुद्रास्तिष्ठन्तु। मूर्ध्न्यादित्यास्तिष्ठन्तु। शिरसि कामेश्वरी कमेश्वरौ स्तिष्ठेताम्। शिखायां वामदेवस्तिष्ठतु। पृष्ठे पिनाकी तिष्ठतु। पुरतः शूली नीतिष्ठतु। पार्श्वयोः शिवाशंकरौ तिष्ठेताम्। सर्वतो वायुस्तिष्ठतु। ततो बहिः सवतोऽग्निर्ज्वालामाला-परिवृतास्तिष्ठंतु। सर्वेष्वंगेषु सर्वादेवता यथास्थानं तिष्ठन्तु मां रक्षन्तु॥

1 अग्निर्मे वाचि श्रितः वाग्घृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि।
2 वायुर्मे प्राणे श्रितः प्राणो हृदये .... .... ....
3 सूर्यो मे चक्षुषि श्रित, चक्षुर्हृदये .... .... ....
4 चन्द्रमा मे मनसि श्रितः मनो हृदये .... .... ....
5 दिशो मे श्रोत्रे श्रिताः श्रोत्रँ हृदये .... .... ....
6 आपो मे रेतसि श्रिताः रेतो हृदये .... .... ....
7 पृथिवी मे शरीरे श्रिता शरीरँ हृदये .... .... ....
8 ओषधिवनस्पतयो मे लोमसुश्रिताः लोमानि हृदये .... ....
9 इन्द्रो मे बले श्रितः बलँ हृदये .... .... ....
10 पर्जन्यो मे मूर्ध्नि श्रितः मूर्धा हृदये .... .... ....
11 ईशानो मे मन्यौ श्रितः मन्युर्हृदये ... .... ....
12 आत्मा मे आत्मनि श्रितः आत्मा हृदये ... .... ....

पुनर्म आत्मा पुनरायुरागात् पुनः प्राणः पुनराकूत मागात्।
वैश्वानरो रश्मिभिर्वा वृधानः अन्तस्तिष्ठत्वमृतस्य गोपाः मां रक्षन्तु॥

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोहमस्मि, ब्रह्माहमस्मि॥

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरद्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

सेवे सिन्दूरसंदोहसुन्दरस्वाङ्गभासुराम् ।
करुणापूरपीयूषकटाक्षां कुलनायिकाम् ॥

द्विनेत्रं द्विभुजं शान्तं गुरुं पद्मासनस्थितम् ।
योगपीठे समासीनं नमामि शिरसि स्थितम् ॥

नमामि सद्गुरुं शान्तं प्रत्यक्षशिवरूपिणम् ।
शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ॥

यां नित्या परया शक्तिर्जगच्चैतन्यरूपिणी ।
तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम् ॥

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥

श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् संततमानतोऽस्मि ॥

ओं ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः । (द्वारस्य दक्षशाखायां)
४ भं भैरवाय नमः । ( ,, वामशाखायां)
४ लं लम्बोदराय नमः । ( ,, ऊर्ध्वशाखायां)

इति द्वारदेवताः संपूज्य ।

तत्त्वाचमनम् ।

४ ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा ।
४ क्लीं हसकहलह्रीं विद्यातत्त्वं शोधयामि स्वाहा ।

४ सौः सकलह्रीं शिवतत्त्वं शोधयामि स्वाहा ।

४ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं सर्वतत्त्वं शोधयामि स्वाहा ।

ऐं क्लीं सौः । இவ் ஒவ்வொரு பீஜைத்தையும் வரிசை கிறமமாக சொல்லி. கேசவா நாராயணு முதலியவைகளுக்கு சொல்லப்பட்ட இடங்களில் வைத்துக்கொள்ளவும் ஆனுல் பத்மனுபா தாமோதராஎன்னும் இடத்தில் மூன்று பீஜங்களை யும் சேர்த்து மார்பில் வைத்துக் கொள்ளவேண்டியது.

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसश्शिवस्सोहं हस्ख्फ्रें हसक्षमलवरयीं हस्रौः स्हौ, सहक्षमलवरयीं स्हौः हसौः ह्रीं श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं (कएईलह्रीं हसक्षमहलह्रीं सकलह्रीं) सौः ऐं क्लीं ह्रीं श्रीं हसकलह्रीं हसकलह्रीं सकलह्रीं हसकल हसकहल सकलह्रीं प्रज्ञानं ब्रह्म । अहं ब्रह्मास्मि । तत्वममसि । अयमात्माब्रह्म हंसश्शिवस्सोहम् स्वरूपनिरुपणहेतवे अमुकांबासमेत अमुकानन्दनाथ स्वश्रीगुरु श्रीपादुकांपूजयामि नमः ॥

ओं ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसश्शिवः हस्ख्फ्रें + अयमात्माब्रह्मसोहं हंसश्शिवः । स्वच्छप्रकाशविमर्श हेतवे अमुकांवासमेत अमुकानन्दनाथ परमगुरु श्री+पूजयामि नमः ॥

ओं ऐं ह्रीं श्री, ऐं क्लीं सौः, हंसश्शिवस्सोहं सोहंहंसशिवः हस्ख्फ्रें+ अयमात्माब्रह्म हंसश्शिव सोहं हंसः स्वात्मारामपञ्चरविलीन् तेजसे अमुकांबासमेत अमुकानन्दनाथ परमेष्टिगुरु श्री+नमः । सुमुरवसुवृत्तुचतरश्र मुद्गरवोयोन्यारव्याभिर्वा मुद्राभि पञ्चपिर्गुरुं प्रणमेत ॥ श्रीविद्यागुरुपादुका ॥

अमृतार्णवमध्योद्यत् स्वर्णद्वीपे मनोरमे ।
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमंडपे ॥

नवरत्नमयश्रीमत् सिंहासनगताम्बुजे ।
त्रिकोणान्तःसमासीनं चंद्रसूर्यायुतप्रभम् ॥ २ ॥

अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।
कोटिकंदर्पलावण्यं सदा षोडशवार्षिकम् ॥ ३ ॥
मंदस्मितमुखांभोजं त्रिनेत्रं चंद्रशेखरम् ।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितत् ॥ ४ ॥
पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः
विद्यासंसदि बिभ्राणं सदानंदमुखेक्षणम् ॥ ५ ॥
महाषोढोदिताशेषदेवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ॥ ६ ॥
पुरुषं वा स्मरेद्देविस्त्रीरूपं वा विचिन्तयेत ।
अथवा निष्कलं ध्यायेत् सच्चिदानंदलक्षणम् ॥ ७ ॥
सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम् ॥

इति स्वाभेदेन ध्यात्वा योनिलिंगसुरभिकपालज्ञानत्रिशूलपुस्तकवनमालानभोमहामुद्रा इति दशमुद्राविरच्य शिरसि श्रीगुरुं ध्यायेत् । यथा ।

सहस्रदलपंकजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगंधपुष्पांबरम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेच्छिरसि हंसगं सदभिधानपूर्वं गुरुं ॥

इति श्रीगुरुं ध्यात्वा । तद्विद्यया तत्पादुकां शिरसि विन्यस्य प्रणम्य स्वगुरुकृतं स्वनाम स्वमूलाधारे स्मृत्वा शिवरूपं स्वात्मानं ध्यायेत् ॥

घण्टापूजा ।

हे घण्टे सुस्वरे पीठे घण्टाध्वनिविभूषिते ।
वादयन्ति परानन्दे घण्टादेवं प्रपूजयेत् ॥
आगमार्थं च देवानां गमनार्थं तु रक्षसाम् ।
कुर्यात् घण्ठारवं तत्र देवताह्वानलाञ्छनम् ॥

इति घण्टानादं कृत्वा ॥

सङ्कल्पः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

मूलेन प्राणानायम्य । देशकालौ संकीर्त्य—

मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि ॥

आत्म पूजा ।

आत्मानं गन्धपुष्पाक्षतैरलङ्कृत्या ॥

आत्मनेनमः । अन्तरात्मनेनमः । परमात्मनेनमः । जीवात्मनेनमः । पुष्पं शिरसि धारयेत् ॥

देहो देवालयप्रोक्तो जीवोदेव स्सनातनः ।
त्यजेदज्ञाननिर्माल्यं सोहं भावेनपूजयेत् ॥
एवमेव स्वरूपिणं ध्यात्वा ॥

ताम्बूलेन सुरभिलवदनः सन् प्रमुदितचित्तः शिवोऽहं इति भावयेत् ॥

आराधयामि मणिसन्निभमात्मलिङ्गम्
मायापुरी हृदय पङ्कज सन्निविष्टम् ।
श्रद्धानीत विमलचित्त जलाभिषेकैः
नित्यं समाधिकुसुमै र्नपुनर्भवाय ॥

रत्नैः कल्पित-मासनं हिमजलैः स्नानं च दिव्यांरं
नानारत्न-विभूषितं मृगमदामोदांकितं चन्दनम् ।
जाती-चंपक-बिल्वबत्र-रचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥
सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पंचविधं पयोदधियुतं रंभाफलं पानकम् ।

शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्जवलं
तांबूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥ २ ॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणा-भेरि-मृदंग-कोहलकला-गीतं च नृत्यं तथा ।
साष्टांगं प्रणतिः स्तुति-र्बहुविधा ह्येतत् समस्तं मया
संकल्पेन समर्पितं तव विभो पूजां गृहाणे प्रभो ॥ ३ ॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम् ॥ ४ ॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम् ।
विहित मविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शंभो ॥ ५ ॥

## आसनपूजा ।

आसनमास्तीर्य दक्षिणहस्ते जलमादाय सौः इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत् ॥

अस्य श्री आसनमहामन्त्रस्य—पृथिव्या मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः ॥

पृ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

पृथिवि

योगासनाय नमः, वीरासनाय नमः, शरासनाय नमः, ओं ऐं ह्रीं श्रीं ओं ह्रीं आधारशक्तिकमलासनाय नमः ॥

इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत् ॥

४ कुं कूर्मा सनाय नमः ॥
४ सं सर्वशक्ति कमलासनाय नमः ॥
४ ओं प्रथिव्यै नमः ॥
४ ह्रीं आधारशक्ति कमलासनाय नमः ॥
४ रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः ।

इति भूमौ पुष्पाञ्जलिं विकिरेत् ॥

दिक्बन्धनंच देहरक्षणं ॥

ऐंन्द्री दिशा सबन्धेन नमश्चक्राय स्वाहा ।
आग्नेयीं .... .... ....
यांयीं .... .... ....
नैर्ऋतीं .... .... ....
वारुणीं .... .... ....
वायवीं .... .... ....
कौवेरी .... .... ....
ऐंशनीं .... .... ....
ऊर्ध्वं .... ... ....
अदरं .... .... ....

देहरक्षा ।

४ श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष—

इति देहे त्रिः व्यापकं कृत्वा ॥

गुं गुरुभ्यो नमः । (दक्षबाहौ)
गं गणपतये नमः । (वामबाहौ)
दुं दुर्गायै नमः । (दक्षोरौ)
वं वटुकाय नमः । (वामोरौ)
यां योगिनीभ्यो नमः । (पादयोः)

क्षं क्षेत्रपालाय ननः । (नाभौ)

पं परमात्मने नम । (हृदये)

४ ओं नमो भगवति तिरस्करिणि महामाये महानिद्रे सकलपशु जनमनश्चक्षुः श्रोत्रतिरस्करणं कुरु कुरु स्वाहा ॥

४ हसन्ति हसितालापे मातङ्गिपरिचारिके मम भवविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा ॥

४ ओन्नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा

इति परितोवह्निप्राकारं विभाव्य

भूर्भुवस्सुवरों इति दिग्बन्धः ॥

४ समस्तप्रकट-गुप्त गुप्ततर-संप्रदाय - कुलोत्तीर्ण- निगर्भ - रहस्याति-रहस्य-परापरातिरहस्य-योगिनीदेवताभ्यो नमः ॥

इति पुष्पाञ्जलिं दत्वा ॥

४ ऐं ह्रः अस्त्राय फट्— इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादि कनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ॥

४ श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक ।
अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे ॥

स्वगुरु-श्रीपरमगुरु-श्रीपरमेष्ठिगुरु ॥ இந்த மூன்று குருமார்களும் ஸ்ரீ சக்கரத்துக்கு வலது பாகத்திலும் நமது தலைமேல் இருந்துகொண்டு. கால்களை நமது இடதுதோள் மேல் வைத்துக்கொண்டு இருப்பதாக பாவனை செய்து மானஸிகமாக இரண்டு இடங்களிலும் பின்வருமாறு ஷோடசோபசாரம் செய்யவேண்டும்.

स्वगुरु प्ररमगुरु परमेष्टिगुरवे नमः । ध्यायामि । आवाहयामि । आसनं समर्पयामि । पाद्यं कल्पयामि । अर्घ्यं कल्पयामि । आचमनीयं

कल्पयामि। मधुपर्कं कल्पयामि। स्नानं कल्पयामि। यज्ञोपवीतं कल्पयामि। गन्धान् कल्पयामि। श्रीस्वगुरवे नमः। श्रीपरमगुरवे नमः। श्रीपरमेष्ठिगुरवे नमः। नानाविधपरिमलपत्रपुष्पाणि समर्पयामि। गुरुवेनमः धूपमाघ्रापयामि। नैवेद्यं समर्पयामि। मध्ये मध्ये पानीयं। उत्तरापोशनं हस्तप्रक्षालनं। आचमनीयं तांबुलं च समर्पयामि। कर्पूरनीराजनं दर्शयामि। गुरुभ्योनमः मन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारान् समर्पयामि। समस्तराजोपचारदेवोपचारान् समर्पयामि। अनया पूजया भगवान्सर्वदेवात्मकः स्वगुरु परमगुरु परमेष्ठिगुरु सुप्रीतो सुप्रसन्नो वरदो भवतु॥

இதேமாதிரியாக சித்திபுத்தி அம்பாஸமேத மஹாகண பதியை ஸ்ரீ சக்கரத்துக்கு இடது பாகத்தில் இருப்பதாகவும். நம்முடைய தலைமேல் வலது பக்கம் உட்கார்ந்து வலது தோள்மேல் காலைவைத்து இருக்கிறதாக பாவித்து, மேலே சொல்லப்பட்டவிதமாக ஷோடசோபசாரம் செய்து கடைசியில்.

குறிப்பு :- மற்றது எல்லாவற்றிக்கும் பிரிதிநிதி உண்டு. ஆனால் தூபம் தீபம் கற்பூரம் ஆராத்தி நைவேத்யம் இவைகளுக்கும் பிரதிநிதி கிடையாது. இவைகளையும் ப்ரத்யகரமாக செய்யவேண்டும்.

अनया पूजया भगवान्सर्वदेवात्मकः श्रीमहागणपतिः सुप्रीतो सुप्रसन्नो वरदो भवतु॥ என்று பூஜையை முடிக்கவேண்டியது.

४ अतिक्रूर महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥

ऐं ह्रीं पश्शुंहुं फट् इति ऊर्ध्वम् तालत्रयं कृत्वा॥

४ ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं हंसः सोहं, सोहं हंसः शिवः, श्रीचक्रस्य प्राणा इह प्राणाः॥

४ ओं आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थिताः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा॥

४ ओों अमुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहिभोगम् । ज्योक्प-श्येम सूर्यमुच्चरन्तमनुमते मृळयानस्स्वस्ति ॥

## मन्दिरपूजा ।

( ओों ऐं ह्रीं श्रीं ४ )

४ अमृताम्भोनिधये नमः
४ रत्नद्वीपाय नमः
४ नानावृक्षमहोद्यानाय नमः
४ कल्पवाटिकायै नमः
४ संतानवाटिकायै नमः
४ हरिचन्दनवाटिकायै नमः
४ मन्दारवाटिकायै नमः
४ पारिजातवाटिकायै नमः
४ कदम्बवाटिकायै नमः
४ पुष्परागरत्नप्राकाराय नमः
४ पद्मरागरत्नप्राकाराय नमः
४ गोमेधकरत्नप्राकाराय नमः
४ वज्ररत्नप्राकाराय नमः
४ वैडूर्यरत्नप्राकाराय नमः
४ इन्द्रनीलरत्नप्राकाराय नमः
४ मुक्तारत्नप्राकाराय नमः
४ मरकतरत्नप्राकाराय नमः
४ विद्रुमरत्नप्राकाराय नमः
४ माणिक्यमण्टपाय नमः
४ सहस्रस्तम्भमण्टपाय नमः
४ अमृतवापिकायै नमः
४ आनन्दवापिकायै नमः
४ विमर्शवापिकायै नमः
४ बालातपोद्गाराय नमः
४ चन्द्रिकोद्गाराय नमः
४ महाशृङ्गारपरिघायै नमः
४ महापद्माटव्यै नमः
४ चिन्तामणिमयगृहराजाय नमः
४ पूर्वाम्नायमयपूर्वद्वाराय नमः
४ दक्षिणाम्नायमयदक्षिणद्वाराय नमः
४ पश्चिमाम्नायमयपश्चिमद्वाराय नमः
४ उत्तराम्नायमयोत्तरद्वाराय नमः
४ रत्नप्रदीपवलयाय नमः
४ मणिमयमहासिंहासनाय नमः
४ ब्रह्ममयैकमञ्चपादाय नमः
४ विष्णुमयैकमञ्चपादाय नमः
४ रुद्रमयैकमञ्चपादाय नमः
४ ईश्वरमयैकमञ्चपादाय नमः
४ सदाशिवमयैकमञ्चफलकाय नमः
४ हंसतूलिकातल्पाय नमः
४ हंसतूलिकामहोपधानाय नमः
४ कौसुम्भास्तरणाय नमः
४ महावितानकाय नमः
४ महामायायवनिकायै नमः

इति चतुश्चत्वारिंशन्मन्दिरमन्त्रै तत्तदखिलं भावयन्कुसुमाक्षतैरभ्यर्चयेत् ॥

दीपपूजा ।

स्वदक्षभागे गन्धपुष्पाक्षतादीन्निधाय दीपानभितः प्रज्वाल्य ॥

घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः ।

सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः ॥

(दक्षवामभागौ देव्या एव)

IV V என்கிற இடங்களில் இருக்கும் தீபங்களை ஏற்றி வைக்கவும்.

दीपदेवि महादेवि शुभं भवतु मे सदा ।

यावत्पूजासमाप्तिः स्यात्तावत्प्रज्वल सुस्थिरा ॥

इति पुष्पाञ्जलिं दद्यात् ॥

मूलेन चक्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलीन्दद्यात् ॥

---

॥ द्वितीयः खण्डः ॥

भूतशुद्ध्यादि विघ्नोत्सारणान्तम् ।

भूतशुद्धिः ।

श्वाससमीरं पिङ्गलया अन्तराकृष्य—

४ मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेन एकीभूतं विभाव्य इडया वायुं रेचयेत् ॥

४ यं 16. (इडया पूरयित्वा) संकोचशरीरं शोषय शोषय स्वाहा—इति निजशरीरं शोषितं विभाव्य रेचयेत् ॥

४ रं 16. (पिङ्गलया पूरयित्वा) संकोचशरीरं दह दह पच पच स्वाहा-इति प्लुष्टं भस्मीकृतं च विभाव्य इडया रेचयेत् ॥

४ वं 16. (इडया पूरयित्वा) परमशिवामृतं वर्षय वर्षय स्वाहा—इति तद्भस्म सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं च विभाव्य पिङ्गलया रेचयेत् ॥

४ लं 16. (पिङ्गलया पूरयित्वा) शांभवशरीरमुत्पादयोत्पादय स्वाहा इति तद्भस्मनो दिव्यशरीरमुत्पन्नं विभाव्य इडया रेचयेत् ॥

४ हंसः सोहं (इडया पूरयित्वा) अवतर अवतर शिवपदात् जीव सुषुम्नापथेन प्रविश मूलशृङ्गाटकं उल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोहं स्वाहा — इति परमशिवेनैकीकृतं जीवं पुनः सुषम्नावर्त्मना मूलाधारे स्थापितं चिन्तयेत् ॥

आत्मप्राणप्रतिष्ठा ।

हृति दक्षकरतलं निधाय—४ आं सोहं—इति त्रिः पठेत् ॥

गर्भाधानादि पंचदशसंस्कारसिध्यर्थं पंचदशवारं

ओं ह्रीं इति प्राणानायं ॥

अथ मूलेन षोडशधा दशधा त्रिधा वा प्राणानायम्य ॥

विघ्नोत्सारणम् ॥

४ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति मन्त्रमुच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रय-करास्फोटनत्रय-क्रूरदृष्ट्यवलोकनपूर्वक-तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् ॥

अथ नमः इति अङ्कुशमन्त्रमुच्चारयन् अङ्कुशमुद्रया शिखांबध्नीयात् ॥

॥ तृतीयः खण्डः ॥

॥ न्यासाः ॥

मातृकान्यसः ।

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृकासरस्वती देवता । हल्भ्यो बीजेभ्यो नमः, स्वरेभ्यः शक्तिभ्यो नमः, बिन्दुभ्यः कीलकेभ्यो नमः, मम श्रीविद्याङ्गत्वेन न्यासे विनियोगः ॥

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात् ॥

* ७ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः

७ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः

७ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः

७ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः

७ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः

७ अं यं रं लं वं शं षं सं हं ळं क्षं अः

करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यासः । भूर्भुवसुवरोम् इति दिग्बन्धः ॥

ध्यानम् ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षो
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

लमित्यादि पञ्चपूजां कृत्वा ।

बहिर्मातृका ।

मातृकाः त्रितारीबालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषुन्यसेत् ।

---

* ७–ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः इत्यस्य संकेतः ।

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः

अं नमः हंसः (शिरसि)

७ आं ,, (मुखवृत्ते)

७ इं ,, (दक्षनेत्रे)

७ ईं ,, (वामनेत्रे)

७ उं ,, (दक्षकर्णे)

७ ऊं ,, (वामकर्णे)

७ ऋं ,, (दक्षनासापुटे)

७ ॠं ,, (वामनासापुटे)

७ ऌं ,, (दक्षगण्डे)

७ ॡं ,, (वामगण्डे)

७ एं ,, (ऊर्ध्वोष्ठे)

७ ऐं ,, (अधरोष्ठे)

७ ओं ,, (ऊर्ध्वदन्तपंक्तौ)

७ औं ,, (अधोदन्तपंक्तौ)

७ अं ,, (जिह्वाग्रे)

७ अः ,, (कण्ठे)

७ कं ,, (दक्षबाहुमूले)

७ खं ,, (दक्षकूर्परे)

७ गं ,, (दक्षमणिबन्धे)

७ घं ,, (दक्षकराङ्गुलिमूले)

७ ङं ,, (दक्षकराङ्गुल्यग्रे)

७ चं ,, (वामबाहुमूले)

७ छं ,, (वामकूर्परे)

७ जं ,, (वाममणिबन्धे)

७ झं ,, (वामकराङ्गुलिमूले)

७ ञं ,, (वामकराङ्गुल्यग्रे)

७ टं ,, (दक्षोरुमूले)

७ ठं ,, (दक्षजानुनि)

७ डं ,, (दक्षगुल्फे)

७ ढं ,, (दक्षपादाङ्गुलिमूले)

७ णं ,, (दक्षपादाङ्गुल्यग्रे)

७ तं ,, (वामोरुमूले)

७ थं ,, (वामजानुनि)

७ दं ,, (वामगुल्फे)

७ धं ,, (वामादाङ्गुलिमूल)

७ नं ,, (वामपादाङ्गुल्यग्रे)

७ पं ,, (दक्षपार्श्वे)

७ फं ,, (वामपार्श्वे)

७ बं ,, (पृष्ठे)

७ भं ,, (नाभौ)

७ मं ,, (जठरे)

७ यं ,, (हृदये)

७ रं ,, (दक्षकक्षे) (दक्षांशे)

७ लं ,, (गलपृष्ठे) (ककदि)

७ वं ,, (वामकक्षे) (वामांशे)

७ शं ,, (हृदयादिदक्षकराङ्गुल्यन्तं)

७ षं ,, (हृदयादिवामकराङ्गुल्यन्तं)

७ सं ,, (हृदयादिदक्षपादाङ्गुल्यन्तं)

७ हं ,, (हृदयादिवामपादाङ्गुल्यन्तं)

७ ळं ,, (हृदयादिपादाङ्गुल्यन्तं)

७ क्षं ,, (हृदयादिब्रह्मरन्ध्रान्तं)

II ॥ अथ अन्तर्मातृका ॥

अस्य श्री अन्तर्मातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मणे ऋषये नमः (शिरसि) गायत्र्यै छन्दसे नमः (मुखे) अन्तर्मातृकासरस्वत्यै देवतायै नमः (हृदये) हरभ्यो बीजेभ्यो नमः (गुह्ये) स्वरेभ्यश्शक्तिभ्यो नमः (पादयोः) बिन्दुभ्यः कीलकेभ्यो नमः (नाभौ) अन्तर्मातृकासरस्वतीप्रसादसिध्यर्थे न्यासे विनियोगाय नमः ॥

ऐं ह्रीं श्रीं ऐं क्लीं सौः अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः हृदयाय नमः
,, इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः शिरसे स्वाहा
,, उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः शिखायै वषट्
,, एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः कवचाय हुं
,, ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट्
,, अं यं रं लं वं शं षं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः अस्त्रायफट्

व्योमेन्द्वौरसनार्णकर्णिकमुचां द्वन्द्वैः स्फुरत्केसरं
पत्रान्तर्गतपञ्चवर्गयशळाणादित्रिवर्गं क्रमात् ।
आशास्वश्रिषु लान्तलाङ्गलियुजा क्षोणीपुरेणावृतं
वर्णाब्जं शिरसि स्थितं विषगदप्रध्वंसि मृत्युञ्जयम् ॥ इति ॥

ओंकारीं तनुमात्मपंचरनिभां षाषट्चक्रसंचारिणां
इडापिङ्गलमध्यवर्तिविलसद्ब्रह्माण्डमध्यस्थितां ।
इन्दुर्वाणधरां धनुर्वरकरां पुष्पायुधांमोहिनीं
तारापूर्णमुखीं भजेसुखकरीं अंतर्महामातृकाम् ॥

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।

वासान्ते वालमध्ये उफकठसहिते कण्ठमूले स्वाराणां
हं क्षं तत्वार्थयुक्तं सकलदलयुतं वर्णरूपं नमामि ॥

ब्रह्मरन्ध्रे । बिन्दु-अष्टदल वृत्त चतुरश्रंविलिख्य । बिन्द्रौ ७ हसौः नमः । अन्तः अष्टदलेषु द्वे द्वे अक्षराणिसबिन्दु अकारादि स्ववर्णान् विलिख्य । बहिः अष्टदलेषु अष्टवर्गं विलिख्य । ( अं नमः हंसः आं नमः हंसः இவ்விதமே உயிரெழுத்துக்கள் முடிய செய்யவும், )

1 कं नमः हंसः + ङं नमः हंस ॥
2 चं नमः हंसः + ञं नमः हंसः ॥
3 टं नमः हंसः + णं नमः हंसः ॥
4 तं नमः हंस + नं नमः हंसः ॥
5 पं नमः हंस + मं नमः हंसः ॥
6 यं नमः हंस + वं नमः हंसः ॥
7 शं नमः हंस + सं नमः हंसः ॥
8 हं नमः हंस + क्षं नमः हंसः इति अष्टवर्गं ॥

बहिः वृत्ते पूर्वादि प्रादक्षिण्येन अं नमः हंस + क्षं नमः हंसः इति विलिख्य ॥

चतुरश्रे चतुर्विदिक्षुषु ( 4 மூலைகளிலும்) ठं नमः हंसः ॥
चतुर्द्वारेषु वं नमः हंसः ॥ इति ब्रह्मरन्ध्रेविभाव्य

७ अं नमः हंसः, आं नमः हंसः ++ अः नमः हंसः ॥
कण्ठे विशुद्धिचक्रे षोडशदलकमले ॥

७ कं नमः हंसः, खं ++ ठं नमः हंसः ॥
हृदये अनाहते द्वादशदलकमले ॥

७ डं नमः हंसः ढं नमः हंस ++ फं नमः हंसः ॥
नाभौ मणिपूरे दशदलकमले ॥

७ बं नमः हंसः, भं नमः हंसः ++ लं नमः हंसः ॥
लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ॥

७ वं नमः हंसः, शं नमः हंसः ++ सं नमः हंसः ॥
गुदोपरि मूलाधारे चतुर्दलकमले ॥
७ हं नमः हंसः, क्षं नमः ॥ भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले ॥
७ अं नमः हंसः, आं नमः हंसः ++ क्षं नमः हंसः ॥
(५० वर्णाः) मूर्ध्नि सहस्रारे ॥ सव्यं
७ क्षं नमः हंसः ॥ अं नमः हंसः, आं नमः हंसः अपसव्यं
७ अं नमः हंसः + क्षं नमः हंसः ॥ सव्यं

## III करशुद्धिन्यासः ।

| | |
|---|---|
| ४ अं नमः (दक्षकरतले) | ४ अं नमः (मध्यमयोः) (हृदयाय) |
| ४ आं नमः (तत्पृष्ठे) | ४ आं नमः (अनामिकयोः) (शिरसे) |
| ४ सौः नमः (तत्पार्श्वयो) | ४ सौः नमः (कनिष्ठिकयो) (शिखायै) |
| ४ अं नमः (वामकरतले) | ४ अं नमः (अङ्गुष्ठयोः) (कवचाय) |
| ४ आं नमः (तत्पृष्ठे) | ४ आं नमः (तर्जन्योः) (नेत्रत्रयाय) |
| ४ सौः नमः (तत्पार्श्वयो): | ४ सौः नमः (करतलकरपृष्ठयोः) अस्त्राय |

## IV आत्मरक्षान्यासः ।

४ मूलं श्रीललितामहात्रिपुरसुन्दर्यै नमः आत्मानं रक्ष रक्ष इतित्रिः अञ्जलिं हृदयेन्यसेत् ॥

## चतुरासनन्यासः ।

४ ह्रीं क्लीं सौः देव्यात्मासनाय नमः (पादयोः)
४ हैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः (जान्वोः)
४ ह्सैं ह्स्क्लीं ह्सौः सर्वमन्त्रासनाय नमः (ऊरुमूले)
४ ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः (मूलादारे)
४ ऐं श्रीललितामहात्रिपुरसुन्दर्यै नमः पृष्ठे

४ क्लीं द्वि श्रीललितामहात्रिपुरसुन्दर्यै नमः हृदये ।
४ सौः त्रि .... .... .... भ्रुवेर्मध्ये ।
७ मू .... .... .... मूर्ध्नी ।

तत्वन्यासः ॥

४ ऐं प्र आत्मतत्वाय नमः दक्षपादे
४ क्रियाशक्तये नमः वामपादे
४ क्लीं द्वि विद्यातत्वाय नमः दक्षपार्श्वे
४ ज्ञानशक्त्यै नमः वामपार्श्वे
४ सौः त्रि शिवतत्वाय नमः दक्षकपोले
४ इच्छाशक्त्यै नमः वामकपोले
४ मूलं सर्वतत्वाय नमः शिरसि
४ तुरीयशक्त्यै नमः मूर्ध्नि

पीठन्यासः ॥

४ ऐं प्र कामगिरिपीठाय नमः मूलाधारे
४ क्लीं द्वि जालन्धरपीठाय नमः हृदये
४ सौः त्रि ओढयाणपीठाय नमः शिरसीः

बालाषडङ्गन्यासः ॥

४ ऐं हृदयाय नमः ४ ऐं कवचाय हुं
४ क्लीं शिरसे स्वाहा ४ क्लीं नेत्रत्रयाय वौषट्
४ सौः शिखायै वषट् ४ सौः अस्त्राय फट्

वशिन्यादिवाग्देवतान्यासः ॥

४ अं आं + + अः ब्लूं वशिनीवाग्देवतायै नमः (शिरसि)
४ कं खं गं घं ङं क्ल्ह्रीं कामेश्वरीवाग्देवतायै नमः (ललाटे)
४ चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः (भ्रूमध्ये)

४ टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः (कण्ठे)
४ तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः (हृदये)
४ पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै नमः (नाभौ)
४ यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः (गुह्ये)
४ शं षं सं हं ळं क्षं क्ष्म्रीं कौळिनीवाग्देवतायै नमः (मूलाधारे)

बहिश्चक्रन्यासः ।

४ अं आं सौः चतुरश्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः (पादयोः)

४ ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यैकामाकर्षिण्यादिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (जान्वोः)

४ ह्रीं क्लीं सौः अष्टदळपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहितगुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः (ऊरुमूलयोः)

४ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसम्प्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (नाभौ)

४ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्तिसहितकुळोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (हृदये)

४ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहितनिगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (कण्ठे)

४ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (मुखे)

४ ह्सैं ह्स्क्लरीं ह्सौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (नेत्रयो)

४ पञ्चदशी विन्द्यात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरा-परातिरहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः (मूर्ध्नि)

अन्तश्चक्रन्यासः ।

४ अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशति-शक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः (अधःसहस्रारे)

४ ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षिण्या-दिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (अधःसहस्रार-स्योपरि विषुसंज्ञे षड्दले)

४ ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टश-क्तिसहितगुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः (मूलाधारे)

४ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्-यादिचतुर्दशशक्तिसहितसंप्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (स्वाधिष्ठाने)

४ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदा-दिदशशक्तिसहितकुळोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (मणिपूरे)

४ ह्रीं क्लीं अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहि-तनिगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (अनाहते)

४ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहितरह-स्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (विशुद्धौ)

४ ह्सैं ह्स्क्लरीं ह्सौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रि-शक्तिसहिताअतिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (लम्बिकाग्रे)

४ पञ्चदशी विन्द्यात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरा-परातिरहस्ययोगिनीरूपायै महात्रिपुरासुन्दरीदेव्यै नमः (आज्ञायां)

कामेश्वर्यादिन्यासः ।

४ ऐं कएईलहीं आग्निचक्रे कामगिरिपीठे मित्रेशनाथ-नवयोनिचक्रात्मक आत्मतत्व - सृष्टिकृत्य - जाग्रदशाधिष्ठायकेच्छाशक्ति - वाग्भवात्मक - वागीश्वरीस्वरूप - महाकामेश्वरी *ब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः । (मूलाधारे)

४ क्लीं हसकहलह्रीं सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथ-दशारद्वयचतुर्दशारचक्रात्मक - विद्यातत्व - स्थितिकृत्य - स्वप्नदशाधिष्ठायक - ज्ञानशक्ति - कामराजात्मक-कामकलास्वरूप-महावज्रेश्वरी - विष्ण्वात्मशक्तिश्रीपादुकां पूजयामि नमः । (अनाहते)

४ सौः सकलह्रीं सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथ-अष्टदळषोडशदळचतुरश्रचक्रात्मव - शिवतत्व - संहारकृत्य - सुषुप्तिदशाधिष्ठायक - क्रियाशक्तिस्वरूप-महामगमालिनी §रुद्रात्मशक्तिश्रीपादुकां पूजयामि नमः । (आज्ञायां)

४ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ - समस्तचक्रात्मक - सपरिवारपरमतत्व -सृष्टिस्थितिसंहारकृत्य-तुरीयदशधिष्ठायकेच्छाज्ञानक्रियाशान्ताशाक्ति - वाग्भवकामराजशक्तिबीजात्मकपरमशक्तिस्वरूप-श्रीमहात्रिपुरसुन्दरी - परब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः । (ब्रह्मरन्ध्रे)

पुनः आज्ञाचक्रस्य एकैकाङ्गुलोपरि देशे

अं आं सौः नमः (बिन्दौ)
ऐ क्लीं सौः नमः (अर्धचन्द्रे)
ह्रीं क्लींसौः नमः (रोधिन्यां)
हैं ह्क्लीं ह्सौः नमः (नादे)
ह्सैं ह्स्क्लीं ह्स्सौ नमः (नादान्ते)
ह्रीं क्लीं ब्लैं नमः (शक्तौ)

---

§ रुद्रात्म * ब्रह्मात्म

ह्रीं श्रीं सौः नमः (व्यापिकायां)
ह्सैं ह्स्क्ल्रीं ह्स्रौः नमः (समनायां)
(पञ्चदशी) नमः (उन्मनायां)
(षोडशी) नमः (ब्रह्मरन्ध्रे महाबिन्दौ) ॥

मूलविद्यान्यासः ।

४ कं नमः (शिरसि)
४ एं नमः (मूलाधारे)
४ ईं नमः (हृदि)
४ लं नमः (दक्षनेत्रे)
४ ह्रीं नमः (वामनेत्रे)
४ हं नमः (भ्रूमध्ये)
४ सं नमः (दक्षश्रोत्रे)
४ कं नमः (वामश्रोत्रे)
४ हं नमः (मुखे)
४ लं ममः (दक्षभुजे)
४ ह्रीं नमः (वामभुजे)
४ सं नमः (पृष्ठे)
४ कं नमः (दक्षजानुनि)
४ लं नमः (वामजानुनि)
४ ह्रीं नमः (नाभौ)

अथ ऋष्यादिषडङ्गन्यासं यथोपदेशं कुर्यात् ॥
षोडश्युपासकानां विशेषन्यासाः ।

श्रीषोडशाक्षरीन्यासः ।

४ मूलं नमः । दक्षमध्यानामिकाभ्यां शिरसि न्यसेत् । तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा—

४ मूलं नमः महासौभाग्य मे देहि परसौभाग्यं दण्डयामि । सौभाग्यदण्डिन्या मुद्रया वामकर्णसंवेष्टनपूर्वकं आमस्तकचरणं वामाङ्गे न्यसेत् ॥

४ मूलं नमः मम शत्रून्निगृह्णामि । रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत् ॥

४ मूलं नमः त्रैलोक्यस्याहं कर्ता । त्रिखण्डया मुद्रया फाले न्यसेत् ॥

४ मूलं नमः । त्रिखण्डया मुद्रया मुखवेष्टनत्वेन न्यसेत् ॥

४ मूलं नमः। त्रिखण्ड्या मुद्रया दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत् ॥

४ ओं मूलं नमः। त्रिखण्डया गळोर्ध्वमामस्तकं न्यसेत् ॥

४ ओं मूलं ओं नमः। त्रिखण्डया मुद्रया मस्तकात् पादपर्यन्तं पादादामस्तकं च न्यसेत् ॥

४ मूलं नमः। योनिमुद्रया मुखे न्यसेत् ॥

४ मूलं नमः। योनिमुद्रया ललाटे न्यसेत ॥

संमोहनन्यासः।

४ मूलं। मूलविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिकां मूर्ध्नि त्रिः परिभ्राम्य—

४ मूलं। ब्रह्मरन्ध्रे अङ्गुष्ठानामिके न्यसेत् ॥

४ मूलं। मणिबन्धद्वये ,,

४ मूलं। फाले ,,

४ मूलं। शाक्ततिलकं धारयेत् ॥

| | संहारन्यायः | सृष्टिन्यासः | स्थितिन्यासः |
|---|---|---|---|
| ४ श्रीं नमः | पादयोः | ब्रह्मरन्ध्रे | अङ्गुष्ठयोः |
| ४ ह्रीं ,, | जङ्घयोः | फाले | तर्जन्योः |
| ४ क्लीं ,, | जान्वोः | नेत्रयोः | मध्यमयोः |
| ४ ऐं ,, | कटिभागद्वये | कर्णयोः | अनामिकयोः |
| ४ सौः ,, | पृष्ठे | नासापुटयोः | कनिष्ठिकयोः |
| ४ ओं ,, | लिङ्गे | गण्डयोः | मूर्ध्नि |
| ४ ह्रीं ,, | नाभौ | दन्तपङ्क्तौ | मुखे |
| ४ श्रीं ,, | पार्श्वयोः | ओष्ठयोः | हृदि |
| ४ क-५ ,, | स्तनयोः | जिह्वायां | नाभेः आपादद्वयं |

| | | | | |
|---|---|---|---|---|
| ४ | ह-६ ,, | अंसयोः | कण्ठे | कण्ठादिनाभ्यन्तं |
| ४ | स-४ ,, | कर्णयोः | पृष्ठे | मूर्धादिकण्ठान्तं |
| ४ | सौः ,, | मूर्ध्नि | सर्वाङ्गे | पादाङ्गुष्ठयोः |
| ४ | ऐं ,, | मुखे | हृदि | पादतर्जन्योः |
| ४ | क्लीं ,, | नेत्रयोः | स्तनयोः | पादमध्यमयोः |
| ४ | ह्रीं ,, | कर्णयुगसन्निधौ | उदरे | पादानामिकयोः |
| ४ | श्रीं ,, | कर्णवेष्टनयोः | लिङ्गे | पादकनिष्ठिकयोः |

न्यस्य मूलेन देहे व्यापकं कुर्यात् ।
दीपानि प्रज्वाल्य यथाशक्ति मूलं जपेत् ॥

लघुषोढान्यासः

अस्य श्रीलघुषोढान्यासस्य दक्षिणामूर्तये ऋषये नमः—शिरसि । गायत्र्यै छन्दसे नमः—मुखे । गणेशग्रहनक्षत्रयोगिनीराशिपीठरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः—इति हृदि । श्रीविद्याऽङ्गत्वेन न्यासे विनियोगाय नमः—इति करसम्पुटे ॥

ओं ऐं ह्रीं श्री अं कं खं गं घं ङं आं ऐं अङ्गुष्ठाभ्यां नमः ॥
४ इं चं छं जं झं ञं ईं क्लीं तर्जनीभ्यां नमः ॥
४ उं टं ठं डं ढं णं ऊं सौः मध्यमाभ्यां नमः ॥
४ एं तं थं दं धं नं ऐं ऐं अनामिकाभ्यां नमः ॥
४ ओं पं फं बं भं मं औं क्लीं कनिष्ठिकाभ्यां नमः ॥
४ अं यं रं लं वं शं षं सं हं ळं क्षं अः सौः करतलकरपृष्ठाभ्यां नमः ॥

एवं हृदयादिन्यासः । ध्यानम्—

उद्यत्सूर्यसहस्राभां पीनोन्नतपयोधराम् ।
रक्तमाल्याम्बरालेपां रक्तभूषणभूषिताम् ॥

पाशाङ्कुशधनुर्बाणभास्वत्पाणिचतुष्टयाम् ।
लसन्नेत्रत्रयां स्वर्णमुकुटोद्भासिमस्तकाम् ॥

गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम् ॥

आयुधक्रमस्तु सपर्याप्रकरण एवोक्त इहानुसन्धेयः । इति श्रीदेवीं समष्टिरूपेण ध्यात्व, गणेशादिव्यष्टिरूपेण च ध्यायेत् ॥

गणेशन्यासः

तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान् ॥
ते तु सिन्दूरवर्णाभाः सर्वालङ्कारभूषिताः ।
एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ॥

वामोर्ध्वकरमारभ्य वामाधः करपर्यन्त गणेशानां पाशादिध्यानम् । शक्तीनां तु वामकरे कमलं दक्षिणे च प्रियाश्लेष इति ध्यात्वा, मातृकास्थानेषु त्रितारीमातृकापूर्वकं गणेशान् न्यसेत् । यथा—

७ अं श्रीयुक्ताय विघ्नेशाय नमः । शिरसि ॥
७ आं ह्रीयुक्ताय विघ्नराजाय नमः । मुखवृत्ते ॥
७ इं तुष्टियुक्ताय विनायकाय नमः । दक्षनेत्रे ॥
७ ईं शान्तियुक्ताय शिवोत्तमाय नमः । वामनेत्रे ॥
७ उं पुष्टियुक्ताय विघ्नहृते नमः । वामकर्णे ॥
७ ऊं सरस्वतीयुक्ताय विघ्नकर्त्रे नमः । वामकर्णे ॥
७ ऋं रतियुक्ताय विघ्नराजे नमः । दक्षनासापुटे ॥
७ ॠं मेधायुक्ताय गणनायकाय नमः । वामनासापुटे ॥
७ ऌं कान्तियुक्ताय एकदन्ताय नमः । दक्षगण्डे ॥
७ ॡं कामिनीयुक्ताय द्विदन्ताय नमः । वामगण्डे ॥

४ रां रीं रूं रैं रौं रः रुद्रशापविमोचकायै स्वाहा ॥

४ ऐं व्लूं झ्रीं जुं सः अमृते अमृतोद्भवे अमृतेश्वरी

अमृतवर्षिणी अमृतं स्रावय स्रावय स्वाहा । नमः ॥

४ इदं विष्णुर्विचक्रमे त्रेधानिधतेपदं समूडमस्यपा ँसुरे ॥ क्रां क्रीं क्रूं क्रैं क्रौं क्रः ॥ कृष्णशाप विमोचकायै स्वाहा ॥

४ दां दीं दूं दैं दौं दः दुर्वासशापविमोचकायै स्वाहा ॥

४ वां वीं वूं वैं वौं वः वरुणशाप विमोचकायै स्वाहा ॥

४ सूर्यमण्डल संभूते वरुणानवमध्यगे। अमां बीजंमयेदेवी शुक्रशाप विमोचकायै स्वाहा ॥

मूलेन ॥ नैवेद्यं ॥ योनिमुद्रया नमस्कृत्य ॥

*பிறகு அந்த விசேஷார்க்ய பாத்திரத்தை ஒன்பது என்கிற இடத்தில் யந்திரத்தின் மேல் வைக்கவேண்டும்.*

आण्वादि पशुपाशमोचिनीं आत्मभैरवसुखप्रबोधिनीं गद्यपद्यमधवाग्विला-सिनीं आद्यमद्यपरमेश्वरीं भजे ॥ ओस्वाधिष्ठया मधिष्टया पवस्व सोमधारया ॥ इद्रायपातवे सुतः रक्षोहाविश्वचर्षणिरभियोनिमपोदतं द्रणास्सधस्थमासदत् ॥

७ ह्स्ख्फ्रें पथिक्देवदाभ्यो हुंफट्स्वाहा ॥

७ ग्राम चण्डालिनी हुंफट् स्वाहा ॥

७ क्रोध ,, ,,

७ दृष्टि ,, ,,

७ स्पर्श ,, ,,

७ सृष्टि ,, ,,

७ घट ,, ,,

७ तपनवेद ,, ,,

७ निर्देश ,, ,,

७ सर्वजनदृष्टिस्पर्शदोष ,,

७ पशुपाश चण्डालिनी हुफट् स्वाहा ॥

इत्येकादशदोषान्निरस्य। कां कीं कूं कैं कौं कः विकारशोषिणि अस्य-विकारान् हनहन स्वाहा ॥

पान्तदेवताः गन्धपुष्पाक्षतैः कलामृतबिन्दु युक्तैस्संपूज्य ॥

अथविशेषार्घ्यपात्रं करेणस्पृष्टवा ॥

४ ओं ह्रीं हौं नमःशिवाय इति अष्टवारम् जपित्वा

४ ओं श्रीं पशु हुं फट् इति अष्टवारमभिमन्त्र्य

४ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।

भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः ॥

४ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

४ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

४ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥

४ ईशानस्सर्वविद्यानां ईश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों ॥

वह्निकलाः।

| | |
|---|---|
| ४ यं धूम्रार्चिषे नमः | ४ षं सुश्रियै ननः |
| ४ रं ऊष्मायै ,, | ४ सं सुरूपायै ,, |
| ४ लं ज्वलिन्यै ,, | ४ हं कपिलायै ,, |
| ४ वं ज्वालिन्यै ,, | ४ ळं हव्यवाहिन्यै ,, |
| ४ शं विस्फुलिङ्गिन्यै ,, | ४ क्षं कव्यवाहिन्यै ,, |

४ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम्। नमः ॥

सूर्यकलाः ।

४ कं भं तपिन्यै नमः
४ खं बं तापिन्यै ,,
४ गं फं धूम्रायै ,,
४ घं पं मरीच्यै ,,
४ ङं नं ज्वालिन्यै ,,
४ चं धं रुच्यै ,,
४ छं दं सुषुम्नायै नमः
४ जं थं भोगदायै ,,
४ झं तं विश्वायै ,,
४ ञं णं बोधिन्यै ,,
४ टं ढं धारिण्यै ,,
४ ठं डं क्षमायै ,,

४ आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् । नमः ॥

सोमकलाः :

४ अं अमृतायै नमः
४ आं मानदायै ,,
४ इं पूषायै ,,
४ ईं तुष्ट्यै ,,
४ उं पुष्ट्यै ,,
४ ऊं रत्यै ,,
४ ऋं धृत्यै ,,
४ ॠं शशिन्यै ,,
४ लृं चन्द्रिकायै नमः
४ ॡं कान्त्यै ,,
४ एं ज्योत्स्नायै ,,
४ ऐं श्रियै ,,
४ ओं प्रीत्यै ,,
४ औं अङ्गदायै ,,
४ अं पूर्णायै ,,
४ अः पूर्णामृतायै ,,

४ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् । भवावाजस्यसङ्गथे । नमः

ब्रह्मकलाः । अं ब्रह्मकलाभ्यो नमः ॥

४ कं सृष्ट्यै नमः
४ खं ऋद्ध्यै ,,
४ गं स्मृत्यै ,,
४ घं मेधायै ,,
४ ङं कान्त्यै ,,
४ चं लक्ष्म्यै नमः
४ छं द्युत्यै ,,
४ जं स्थिरायै ,,
४ झं स्थित्यै ,,
४ ञं सिद्ध्यै ,,

७ हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतस द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । नमः ॥ ४ अकाररूपायै सृष्टिकर्त्र्यै ब्रह्मणे नमः ॥

विष्णुकलाः । उं विष्णुकलाभ्यो नमः ॥

| | |
|---|---|
| ७ टं जरायै नमः | ७ तं कामिकायै नमः |
| ७ ठं पालिन्यै ,, | ७ थं वरदायै ,, |
| ७ डं शान्त्यै ,, | ७ दं ह्लादिन्यै ,, |
| ७ ढं ईश्वर्यै ,, | ७ धं प्रीत्यै ,, |
| ७ णं रत्यै ,, | ७ नं दीर्घायै ,, |

७ प्रतद्विष्णुस्तवते वीर्याय मृगोनभीमः कुचरो गिरिष्ठाः । यस्योरुषुत्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा । नमः ॥ ७ उं उकाररूपाय स्थिति-कर्त्र्यै विष्णवे नमः ॥

रुद्रकलाः । मं रुद्रकलाभ्यो नमः ॥

| | |
|---|---|
| ७ पं तीक्ष्णायै नमः | ७ यं क्षुधायै नमः |
| ७ फं रौद्र्यै ,, | ७ रं क्रोधिन्यै ,, |
| ७ बं भयायै ,, | ७ लं क्रियायै ,, |
| ७ भं निद्रायै ,, | ७ वं उद्गायै ,, |
| ७ मं तन्द्र्यै ,, | ७ शं मृत्यवे ,, |

७ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय मामृतात् । नमः ॥ ७ मं मकाररूपाय संहारकर्त्र्यै रुद्रेभ्यो नमः ॥

ईश्वरकलाः । यं बिन्देश्वरी कलाभ्यो नमः ॥

| | |
|---|---|
| ७ षं पीतायै नमः | ७ हं अरुणायै नमः |
| ७ सं श्वेतायै नमः | ७ क्षं असितायै नमः |

७ तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।

तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते। विष्णोर्यत्परमं पदम्। नमः॥
७ यं गायत्री विन्दुरूपाय तिरोधानकर्त्र्यै ईश्वरकलायै नमः॥

सदाशिवकलाः। हं सदाशिवकलाभ्यो नमः॥

| | |
|---|---|
| ७ अं निवृत्त्यै नमः | ७ लृं परायै मनः |
| ७ आं प्रतिष्ठायै ,, | ७ लॄं सूक्ष्मायै ,, |
| ७ इं विद्यायै ,, | ७ एं सूक्ष्मामृतायै ,, |
| ७ ईं शान्त्यै ,, | ७ ऐं ज्ञानायै ,, |
| ७ उं इन्धिकायै ,, | ७ ओं ज्ञानामृतायै ,, |
| ७ ऊं दीपिकायै ,, | ७ औं आप्यायिन्यै ,, |
| ७ ऋं रेचिकायै ,, | ७ अं व्यापिन्यै ,, |
| ७ ॠं मोचिकायै ,, | ७ अः व्योमरूपायै ,, |

७ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा॥ नमः॥

७ मूलं/16 त्रिपुरसुन्दरी कलाभ्यो नमः॥

हं नामरूमायानुग्रहकर्त्र्यै सदाशिवायै नमः॥

इति 88 कलाः संपूज्यः

विशेषार्घ्यं प्राणप्रतिष्ठाविधिः॥

७ मूलम्/16 अस्यश्री महात्रिपूरसुन्दरीमुद्दिश्य विशेषार्घ्य प्राणप्रतिष्ठा महामन्त्रस्य ब्रह्मविष्णु महेश्वर ऋषिः ऋग्यजुस्साम अथर्वाणिच्छन्दाँसि प्राणशक्तिः परादेवता॥ आं बीजं। ह्रीं शक्तिः। क्रों कीलकं॥ प्राणप्रतिष्ठार्थेजपेवनियोगः बीजेन करषडंगन्यासः॥ ध्यानम्॥

रक्तांबोधिस्थपोतोल्लसिदरुणसरोजाधिरुढाकराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान् ।
बिभ्राणासृक्कपालं त्रिणयनलसितापीनवक्षोरुहाढ्या
देवीबालार्कवर्णा भवतुशुभकरी प्राणशक्तिः परानः ॥

लंइत्यादिपञ्चपूजा ॥

आं ह्रीं क्रों यं रं लं वं शं षं सं सोहं हंसः क्रों ह्रीं आं श्रीं महात्रिपुर सुन्दर्याः प्रणः इहप्राणाः ॥

आं ह्रीं क्रों यं रं लं वं शं षं सं सोहं हंसः श्री+याः जीवइहस्थिताः ॥

.... .... .... .... .... सर्वेन्द्रयाणि

वाग्मनश्चक्षुश्रोत्र जिह्वाघ्राणप्राणाऽपान व्यानोदान
समानाः इहैवागत्य अस्मिन्विशेषार्घ्ये सुखंचिरंतिष्ठन्तु स्वाहा ॥

ओं ह्रीं ओं हंसः इति प्राणप्रतिष्ठा ॥

ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहिभोगं । ज्योक्पश्येम सूर्यमुश्चरन्तमनुमते मृडयान स्वस्ति ॥

आवाहिताभव स्थापिताभव- सन्निहताभव सन्निरुद्धाभव- अवकुण्ठिताभव सुप्रीताभव- सुमुखाभव सुप्रसन्नाभव- वरदाभव प्रसीदप्रसीद त्रिपुरेशी जगद्वन्द्ये यावत्पूजावसनकं तावत्वं प्रीतिभावेन सुस्तिराभवसर्वदा ॥

अकारादि क्षकारान्तं सबिन्दमातृकामनुम् त्रिवारं जपेत् ।

४ मूलं नमः ॥

1 ऐं अखण्डैकरसानन्दकर परसुधात्मनि ।
स्वच्छन्दस्पुरणंमातर्निधेहि कुलसुन्दरी ॥

2 क्लीं अकुलस्थामृताकारे शुद्धज्ञानकरेपरे ।
अमृतत्वंनिधेह्यस्मिन् वस्तुनीक्लिन्नरूपिणी ॥

3 सौः त्वद्रूपिण्यैकरसत्वं कृत्वार्घ्ये तत्स्वरूपिणी
भूत्वापरामृताकारे मयिचित्स्पुरणं कुरु ॥

1. 2. 3. इति चतुर्थवारं जपेत् ॥

ऐं ब्लूं झ्रौं जूंस: अमृते अमृतोद्भवे अमृतेश्वरी
अमृतवर्षिणी अमृतं श्रावय श्रावय स्वाहा ॥

ओं ह्रीं ऐं वद वद वाग्वादिनी ऐं क्लीं क्लिन्ने क्लेदिनी क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु स्वाहा ह्सौः स्हौः ॥ इति पञ्चवारं जपित्वा । इत्यर्ध्यं संशोधनं ॥ तदर्ध्या मृतंज्योतिर्मयं विभाव्य ॥

ऐं प्र ॥ क्लीं द्वि ॥ सौं त्रि ॥ इति त्रिवारं
मूलेन नववारं जपेत् ॥

४ अं आं ऐं कं चं टं तं पं यं षं प्राण शक्ति श्री+नमः
४ इं ईं ऐं खं छं ठं थं फं रं सं अग्नि ....
४ उं ऊं ओं गं जं डं दं बं लं हं इला ....
४ ऋं ॠं औं घं झं ढं धं भं वं ळं अंबु ....
४ लृं लॄं अंअः ङं ञं णं नं मं शं क्षं क्रिया ....

७ वषट् इति अद्भृत्य ७ फट् इति संरक्ष्य
७ स्वाहा ,, तत्रैवनिक्षिप्य ७ नमः ,, पुष्पंदत्वा
७ हुं ,, अवकुणठ्य ७ मूलेन ,, गालिन्यानिरीक्ष्य
७ वौषट् ,, धेनुमुद्रयामृतोकृत्य ७ ऐं ,, योनिमुद्रयानत्वा

४ श्रीललितामहात्रिपुरसुन्दर्यै नमः ॥ गन्धं समर्पयामि पुष्पं समर्पयामि धूपं माघ्रापयामि दीपं दर्शयामि नैवेध्यं समर्पयामि ॥

इति संपूज्य ॥

रुद्र। पुरुषसूक्तं। श्रीसूक्तं। नारायणसूक्तं। दुर्गासूक्तं। भूसूक्तं। सुधा सूक्तानि। पठेत् ॥

रुद्रप्रश्नः।

ओं नमो भगवते रुद्राय ॥

नमस्ते रुद्र मन्यव उतोत इषवे नमः। नमस्ते अस्तु धन्वने बाहु-

भ्या मुत ते नमः । या त इषुश्शिवतमा शिवं बभूव ते धनुः । शिवा शर-व्या या तव तया नो रुद्र मृडय । या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तयानस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि । यामिषुङ्गिरिशन्त हस्ते [१] बिभर्ष्यस्त वे । शिवाङ्गिरित्रताङ्कुरु मा हिँ्सीः पुरुषञ्जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नस्सर्वमिज्जगदयक्ष्मँ् सुमना असत् । अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीँ्श्च सर्वाञ्जम्भयन्थ्सर्वाश्च यातुधान्यः । असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः । येचेमाँ् रुद्रा अभितो दिक्षु [२] श्रितास्सहस्रशोऽवैषाँ् हेडईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनङ्गोपा अदृश न्नदृशन्नुदहार्यः । उतैनंविश्वा भूतानि स दृष्टो मृडयाति नः । नमो अस्तु नीलग्रीवाय सहस्राक्षायमीढुषे । अथोये अस्य सत्वा-नोऽहन्तेभ्योऽकरन्नमः । प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः [३] परा ता भगवो वप । अवतत्य धनुस्त्वँ् सहस्राक्षशतेषुधे । निशीर्य शल्यानां मुखा शिवोनस्सुमना भव । विज्यन्धनुः कपर्दिनो विशल्यो बाणवाँ् उत । अनेशुन्नस्येषव आभुरस्य निषङ्गथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने । परि ते धन्वनो हेति रस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि-धेहि तम् ॥ [४] [१]

* नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्त-काय त्रिकालाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ॥

नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिके-शेभ्यः पशूनां पतये नमो नम स्सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां

* अत्र अज्ञेयमूलमिमं मन्त्रमाधुनिकाः पठन्ति ।

पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमोनम स्सूतायाहन्त्यायवनानाम्पतये नमोनमः [५] रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ॥ [६] [२]

नमस्सहमानायनिव्याधिन आव्याधिनीनांपतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानांपतये नमो नम स्सृकाविभ्यो जिघाँ सद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नमः [७] इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यश्शयानेभ्यश्च वो नमो नम स्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नम स्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नम स्सभाभ्यस्सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः [८] [३]

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृँ हतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यः [९] रथपतिभ्यश्च वो नमो नम स्सेनाभ्य स्सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यस्सङ्ग्रहीतृभ्यश्च वो नमो नम स्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यश्श्वनिभ्यश्च वो नमो नम श्श्वभ्य श्श्वपतिभ्यश्च वो नमः ॥ [१०] [४]

नमो भवाय च रुद्राय च नमश्शर्वाय च पशुपतये च नमो नीलग्रीवायच शितिकण्ठायच नमः कपर्दिने च व्युप्तकेशाय च नमस्सहस्राक्षाय च

शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सँवृध्वने च [११] नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नम श्शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमस्स्रोतस्याय च द्वीप्याय च ॥ [१२] [५]

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजायचापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमस्सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमश्श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमश्श्रवाय च प्रतिश्रवाय च [१३] नम आशुषेणाय चाशुरथाय च नमश्शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमश्श्रुताय च श्रुतसेनाय च ॥ [१४] [६]

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमस्स्वयुधाय च सुधन्वने च नमस्स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमस्सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च [१५] नमः कूप्याय चावट्यायच नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्यायच रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ [१६] [७]

नमस्सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमश्शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमश्शम्भवे च मयोभवे च नमश्शङ्कराय च मयस्कराय च नम श्शिवाय च शिवतराय च [१७] नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमश्शष्प्याय च फेन्याय च नमस्सिकत्याय च प्रवाह्याय च ॥ [१८] [८]

नम इरिण्याय च प्रपथ्याय च नमः किँ् शिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय नमो हृदय्याय च निवेष्प्याय च नमः पाँ् सव्याय च रजस्याय च नमश्शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च [१९] नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाँ् हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥ [२०] [९]

द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणा मेषां पशूनां माभेर्मा-ऽरो मो एषा ङ्किञ्चनाममत्। या ते रुद्र शिवा तनूश्शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे। इमाँ् रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम्। यथा नश्शमसद् द्विपदेचतुष्पदे विश्वं पुष्टङ्ग्रामे अस्मिन् [१२] अनातुरम्। मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छञ्च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ। मानो महान्त मुत मानो अर्भकं मान उक्षन्त मुत मा न उक्षितम्। मा नोवधीः पितरं मोत मातरं प्रिया मानस्तनुवः [२२] रुद्र रीरिषः। मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः। वीरान्मानो रुद्र भामितोवधीर् हवि-ष्मन्तो नमसा विधेम ते। आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च नश्शर्म यच्छद्विबर्हाः। स्तुहि [२३] श्रुतङ्गर्तसदँयुवानं मृगन्न भींममुपहत्नुमुग्रम्। मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः। परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मति-रघायोः। अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय। मीढुष्टम शिवतम शिवो न स्सुमना भव। परमेवृक्ष आयुधन्निधाय कृत्तिंवसान आचर पिनाकम् [२४] बिभ्रदागहि। विकिरिदविलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रँ् हेतयोऽन्यमस्मन्निवपन्तु ताः। सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि। [२५] [१०]

सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् । तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि । अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाश्शितिकण्ठा श्शर्वा अधः क्षमाचराः । नीलग्रीवाश्शितिकण्ठा दिवँ रुद्रा उपश्रिताः ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । ये भूताना मधिपतयो विशिखासः कपर्दिनः । ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । ये पथांपथिरक्षय ऐलबृदायव्युधः । ये तीर्थानि [२६] प्रचरन्ति सृकावन्तो निषङ्गिणः । य एतावन्तश्च भूयाँसश्च दिशो रुद्रा वितस्थिरे । तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि । नमो रुद्रेभ्यो ये पृथिव्याँयेऽन्तरिक्षे ये दिवि येषामन्नँवातो वर्षमिषवस्तेभ्यो दशप्राचीर्दशदक्षिणा दशप्रतीची र्दशोदीचीर्दशोर्ध्वा स्तेभ्यो नमस्तेनो मृडयन्तु ते यन्द्विष्मो यश्च नोद्वेष्टितँवो जंभे दधामि। [२७] [११]

नमस्तेरुद्र नमो हिरण्यबाहवे नमस्सहमानाय नम आव्याधिनीभ्यो नमो भवाय नमो ज्येष्ठाय नमो दुन्दुभ्याय नमस्सोमाय नम इरिण्याय द्वापे सहस्राण्ये कादश [११] नमस्ते रुद्र नमो भवाय द्वापे सप्तविँशतिः [२७] नमस्ते रुद्र तँवो जंभे दधामि ॥

हरिः ओ (३) म् ॥

॥ रुद्रप्रश्नस्समाप्तः ॥

॥ श्रीः ॥

॥ ओन्नमः परमात्मने ॥

॥ अथ पुरुषसूक्तम् ॥

सहस्रशीर्षापुरुषः । सहस्राक्षस्सहस्रपात् । सभूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशांगुलम् पुरुषएवेदँसर्वम् । यद्भूतयँच्चभव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति एतावानस्यमहिमा । अतोज्यायाँश्च पूरुषः [१] पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि त्रिपादूर्ध्व उदैत्पुरुषः । पादोस्येहाभवात्पुनः । ततोविष्वङ्व्यक्रामत् साशनानशने अभि । तस्माद्विराडजायत । विराजो अधिपूरुषः सजातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः [२] यत्पुरुषेण हविषा । देवायज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्मइध्मश्शरद्धविः । सप्तास्यासन्परिधयः

त्रिस्सप्तसमिधः कृताः । देवायद्यज्ञन्तन्वानाः । अबध्नन्पुरुषं पशुम् । तयँज्ञं बर्हिषि प्रौंख्यन् । पुरुषञ्जातमग्रतः । [३] तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः । सम्भृतं पृषदाज्यम् । पशूँ स्ताँश्चक्रेवायव्यान् आरण्यान्ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे । छन्दाँसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत । [४] तस्मादश्वा अजायन्त । येकेचोभयादतः । गावोह जज्ञिरेतस्मात् । तस्माज्जाता अजावयः । यत्पुरुषव्यँदधुः कतिधाव्यकल्पयन् । मुखङ्किमस्यकौबाहू । कावूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीत् । बाहूराजन्यः कृतः [५] ऊरूतदस्य यद्वैश्यः । पद्भ्याँशूद्रो अजायत । चन्द्रमामामनसोजातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्षम् । शीर्ष्णोद्यौस्समवर्तत । पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथालोकाँअकल्पयन् [६] वेदाहमेतं पुरुषंमहान्तम् । आदित्यवर्णं तमसस्तुपारे । सर्वाणिरूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदनयदास्ते । धातापुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः । [७]

अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि । तस्यत्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसःपरस्तात् । तमेवं विद्वानमृत इहभवति । नान्यः पन्था विद्यतेयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते । [८] तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वोयो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे । ह्रीश्चतेलक्ष्मीश्चपत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौव्यात्तम् । इष्टंमनिषाण । अमुंमनिषाण । सर्वंमनिषाण । [९]

॥ श्रीः ॥

॥ ओन्नमः परमात्मने ॥

॥ अथ श्रीसूक्तम् ॥

हिरण्यवर्णामिति पञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः। आद्यास्तिस्रोऽनुष्टुभः। चतुर्थी बृहती। पञ्चमीषष्ठ्यौ त्रिष्टुभौ। ततोऽष्टावनुष्टुभः। अन्त्या प्रस्तारपंक्तिः। श्रीर्देवता। महालक्ष्मीप्रसादसिध्यर्थे जपे विनियोगः॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयींलक्ष्मीं जातवेदोम आवह॥ तांम आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयङ्गामश्वं पुरुषानहम्। अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्। श्रियन्देवीमुपह्वये श्रीर्मादेवीर्जुषतां॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तींतृप्तां तर्पयंतीम्। पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम्॥ चंद्रां प्रभासाँयशसा ज्वलंतीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मी में नश्यतां त्वां वृणे [१]

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तववृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातुमे। क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीन्नाशयाम्यहम्। अभूतिमसमृद्धिंच सर्वां निर्णुदमे गृहात्॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीँ सर्वभूतानान्तामिहोपह्वये श्रियम्॥ मनसः काममा कूतिं वाचस्सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीश्श्रयतायशः॥ [२]

कर्दमेन प्रजाभूता मयि सम्भवकर्दम। श्रियवाँसयमे कुले मातरं पद्ममालिनीम्॥ आपस्सृजन्तु स्निग्धानि चिक्लीतवसमेगृहे। निच देवीं मातरं श्रियंवासय मे कुले॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदोम आवह॥ आर्द्रां यः करिणीं यष्टिं पिङ्गलां

पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदोम आवह ॥ तां म आवह जातवेदो लक्ष्मी मनपगामिनीम् । यस्यां हिरण्यं प्रभूतङ्गावो दास्योऽश्वान् विन्देऽयं पुरुषानहम् ॥

यश्शुचिः प्रयतोभूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्चदशर्चञ्चश्रीकामस्सततञ्जपेत् ॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसम्भवे । तन्मे भजसिपद्माक्षी येन सौख्यं लभाम्यहम् ॥ अश्वदायी गोदायी धनदायी महाधने । धनं मे जुषतान्देवि सर्वकामांश्च देहि मे ॥ पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि । विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ पुत्रपौत्रधनन्धान्यं हस्त्यश्वादिगवेरथम् । प्रजानां भवसी माता आयुष्मन्तङ्करोतु मे ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तुते वैनतेयसोमपिबसोमंपिबतुवृत्रहा । सोमंधनस्यसोमिनोमह्यं ददातुसोमिनः । नक्रोधोनच मात्सर्यं न लोभो नाशुभामतिः । भवन्तिकृतपुण्यानां भक्तानां श्रीसूक्तञ्जपेत् ॥ सरसिजनिलये सरोजहस्ते धवलतरां शुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमान्देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं देवीन्नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मीचविद्महेविष्णुपत्नीच धीमहि । तन्नोलक्ष्मीः प्रचोदयात् ॥ श्रीवर्चस्व मायुष्यमारोग्यमाविधा च्छोभमानं महीयते । धान्यं धनं पशुं बहुपुत्रलाभं शतसँवत्सरं दीर्घमायुः ॥

॥ श्रीसूक्तं समाप्तम् ॥

नारायणसूक्तम् ॥

तच्छँयोरावृणीमहे । गातुँयज्ञाय । गातुँयज्ञपतये । दैवीस्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वञ्जिगातुभेषजम् । शन्नो अस्तु द्विपदे । शञ्चतुष्पदे ॥

ओम् शान्तिश्शान्तिः ॥

सहस्रशीर्षन्देवँविश्वाक्षं विश्वशम्भुवम् । विश्वन्नारायणन्देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वन्नारायणँहरिम् । विश्वमेवेदं पुरुषस्त-

द्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वरँ शाश्वतँ शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायणपरो ज्योतिरात्मा नारायणः परः नारायणपरंब्रह्म तत्वन्नारायणः परः । नारायमपरोध्याताध्यानन्नारायणः परः । यच्च किञ्चिज्जगथ्सर्वं दृश्यते श्रूयतेऽपिवा [१] अन्तर्बहिश्चतथ्सर्वं व्याप्य नारायणस्थितः । अनन्तमव्ययङ्कविँ समुद्रेऽन्तंविश्वशम्भुवम् । पद्मकोशप्रतीकाशँ हृदयञ्चाप्यधोमुखम् । अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भातीविश्वस्यायतनमहत् । सन्ततँ शिलाभिस्तुलम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरँ सूक्ष्मन्तस्मिन्थ्सर्वंप्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रमुग्विभजन्तिष्ठन्नाहारमजरः कविः । तिर्यं गूर्ध्वमधश्शायी रश्मयस्तस्य सन्तता । सन्तापयति स्वन्देहमापादतलमस्तगः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वाव्यवस्थितः । नीलतोयदमध्यस्था द्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पींताभास्वत्यणूपमा । तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः । सब्रह्म सशिवस्सहरिस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ॥ [२]

ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्व रेतं विरूपाक्षं विश्वरूपाक्षं विश्वरूपाय वै नमो नमः ॥

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥

विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि यो अस्कभायदुत्तरँ सधस्थँविचक्रमाणस्त्रेधोरुगायो विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णो श्शप्त्र्येस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवेत्वा ॥

॥ श्रीः ॥

ओन्नमः परमात्मने ॥

## ॥ अथ भूसूक्तम् ॥

भूमिर्भूम्नाद्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थेते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे । आऽयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरञ्च प्रयन्

ध्रुवः । त्रि ँ शद्धामविराजति वाक्पतङ्गाय शिश्रियें । प्रत्यस्यवहद्युभिः । अस्य प्राणादपानत्यन्तश्चरति रोचता । व्यक्ख्यन्महिषस्सुवः । यत्त्वाक्रुद्धः परोवप-मन्युनायदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि । यत्तेमन्युपरोप्तस्य पृथिवीमनुदध्वसे । आदित्याविश्वे तद्देवा वसवश्च समाभरन् । मनोज्योतिर्जु-षतामाज्यँविच्छिन्नँयज्ञ ँ समिमन्दधातु । बृहस्पतिस्तनुतामिमन्नो विश्वेदेवा इह-मादयन्ताम् ॥

मेदिनीदेवी वसुन्धरा स्याद्वसुधा देवी वासवी । ब्रह्मवर्चसः पितृणां श्रोत्रञ्चक्षुर्मनः ॥ देवी हिरण्यगर्भिणी देवी प्रसोदरी । रसने सत्यायने सीद ॥ समुद्रवदी सावित्रीहनो देवी मह्यकी । महाधरणी महोऽर्व्यतिस्थ ॥ श्रृङ्गेश्रृङ्गे यज्ञेयज्ञे विभीषणी । इन्द्रपत्नी व्याजनी सुरसितइह ॥ वायुपरी जलशयनी स्वयन्धारा सत्यन्धोपरि मेदिनी । सोपरिधत्तङ्गाय ॥ विष्णुपत्नीं महीं देवीं माधवप्रियाम् । लक्ष्मीप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ धनुर्धरायैविद्महे सर्वसिध्यैच धीमहि । तन्नो धरा प्रचोदयात् ॥ इक्षुशालियवसस्यफलाढ्यां पारिजाततरुशोभितमूले । स्वर्णरत्नमणिमण्टपमध्ये चिन्तयेत् सकललोकधरित्रीम् श्यामां विचित्रां नवरत्नभूषितां चतुर्भुजां तुङ्गपयोधरान्विताम् । इन्दीवराक्षीं नवशालिमञ्जरीं शुकं दधानां वसुधां भजामहे ॥ सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रासखायस्सख्यानि जानते भद्रैषां लक्ष्मी-र्निहिताऽधिवाचि ॥

## अथ दुर्गासूक्तम् ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । सनः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफ़-लेषु जुष्टाम् । दुर्गादेवी ँ शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ अग्ने त्वं पार-यानव्यो अस्मान्थ्स्वस्तिभिरतिदुर्गाणि विश्वा । पूश्च पृथ्वीबहुलान उर्वी भवा तोकाय तनयाय शँयोः ॥ विश्वानिनो दुर्गहा जातवेदस्सिन्धुन्ननावा दुरिता-तिपर्षि । अग्ने अत्रिवन्म नसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतना-जित ँ सहमानमुग्रमग्नि ँ हुवेम परमाथ्सधस्थात् । सनः पर्षदतिदुर्गाणि विश्वा

स्थामद्देवो अतिदुरितात्यग्निः ॥ प्रत्नोषिकमीड्यो अध्वरेषुसनाच्च होता नव्यश्च सध्सि । स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यञ्च सौभगमायजस्व ॥ गोभिर्जुष्टमयुजोनिषिक्तं तवेन्द्रविष्णोरनुसञ्चरेम । नाकस्य पृष्ठमभिसँवसानो वैष्णवीं लोक इहमादयान्ताम् ॥ दुरितात्यग्निश्चत्वारिच ॥

सुधा सूक्तम पौराणिकम् ॥

1 सुधासूक्तं प्रवक्ष्यामिसुश्रोणी प्रियसुन्दरी ।
समुद्रमध्यदानेतु-क्षीरोदेसागरोद्भवे ॥

2 तत्रोत्पन्नासुधादेवी कन्यकारूपधारिणी ।
अष्टादशभुजादेवीरक्तान्तायतलोचना ॥

3 शङ्खं खङ्गं धनु श्चैवकपालं परशुंतथ ।
शक्तिं तथागदां घण्टां दधाना स्त्रोन्तरैर्भजैः ॥

4 चक्रं मुष्टिं शरंचैव तोमरं मुशलं हलं
अभयं भिण्डिपालं च तिशूलं दक्षिणैः करैः ॥

5 तिणेत्र दीर्घ तन्वङ्गी कालाग्नि शतशंप्रभा ।
मण्डलं वेष्टयित्वात् फेनामृतं विभूषणा ॥

6 गोमूत्रा क्षीरवर्णाभा बहुरूपा सुधापरा ।
त्रायन्त्या सुरा न्नित्या देवानामभयङ्करी ॥

7 यासुधायामहादेवी योमदस्समहेश्वरः ।
योवर्णा स्सभवे द्ब्रह्मयोगन्धस्सजनार्दना ॥

8 इच्छायां मन्मथोदेवोलालने रत्नभैरवा ।
स्वादौ स्समास्थित स्सूर्यश्शंभो ब्रह्महुताशनौ ॥

9 क्षारेतु वैमरू द्देव फेनोवै भैरवस्मृतः ।
तदाह्लादेपरा शक्तिरानन्दो मोक्ष उच्यते ॥

10 द्रव्यं गङ्गासमाख्यातं घटं तत्सप्तसागरम् ।
घट मूलेस्थितो ब्रह्म घटमध्ये तु माधवः ॥

11 घटकण्ठे स्थितश्शंभु घटाग्रे सर्वदेवता ।
घटमूले स्थितो वाणी घटमध्येरमा स्थिता ॥
12 घटकण्ठे स्थितागौरी घटाग्रे सर्वदेवता ।
द्रव्यं त्वं सुरलोकेस्तु त्रैलो क्यस्यप्रियङ्करी ॥
13 एह्येहि वारुणीदेवी महासिद्धिं कुरुप्रिये ।
अपवित्रं परित्यज्य साधकेसिद्धि मर्प्पय ॥
सर्वमन्त्रमयीदेवी सुधादेवी नमोस्तु ते ॥

एवं अभिमन्दय ॥

इति विशेषार्घ्य विधिः ॥

विशेषार्घ्यपात्रं शङ्खं चक्रचालये ॥

गुरुपात्रं ॥

विशेषार्घ्य पात्रस्य दक्षिणतः ॥
बिन्दु-त्रिकोण वृत्त चतुरश्रात्मक मण्डलं
मत्स्यमुद्रया विलिख्य ॥ मूलेनबिन्दुं अभ्यर्च्य
ऐं अं अग्निमण्डलाय धर्मप्रददशकलात्मने गुरुपात्रमाधाराय नमः ॥
क्लीं उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने गुरुपात्राय नमः ॥
हंसः शिवः सोहं-सोहं हंसः शिवः हंसः शिवसोह सोहं हंसः शिवः
ह्स्रौं हसक्षमलवरयूं नमः ।इति गुरुपात्रे पुष्पंदत्वा ॥

आत्मपात्रं

तद्दक्षिणतः विन्दु-त्रिकोण वृत्तचतुरश्र मण्डलं मत्स्यमुद्रया विलिख्य ॥
मूलेन बिन्दुं अभ्यर्च्य ।
ऐं अं अग्निमण्डलाय धर्मप्रददश कलात्मने आत्मपात्रमाधाराय नमः ॥
क्लीं उं सूर्यमण्डलाय अर्थप्रदद्वादश कलात्मने आत्मपात्राय नमः ॥
ओं हं सः इति आत्मपात्रान्तरे पुष्पं दत्वा ॥

तत्वशोधनम् ॥

विशेषार्घ्यं मृतात्किंचित्पात्रांतरे उध्दृत्य ततः श्रीपात्रमुत्थाप्य गुरु असन्निहिते गुरवेदेवतात्मते स्वशिरः पद्मासनस्थितायश्रीपराबीज (सौः) पूर्वक श्रीपादुके निवेद्यस्थापयेत् पूर्वमण्डले ततः गन्ध पुष्पाक्षतानि करे गृहीत्वा ॥

४ ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदाय कर्तृभ्यो वंशऋषिभ्यो नमो महद्भयः नमो गुरुभ्य स्वगुरु परमगुरु परमेष्टियुरु परापरगुरुभ्यो नमः स्वशिरसि गुरुत्रयजेत् ॥

४ समस्तप्रकट गुप्त गुप्तरसंप्रदाय कुलकौल निगर्भ रहस्यातिरहस्य परापर रहस्ययोगिनी चक्रदेवदाभ्यो नमः श्री+नमः ॥

४ श्रीनाथाथि गुरुत्रयं गणपति पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतिक्रमं मण्डलं वीराचष्ट चतुष्कषष्टिनवकं वीरावली पंचकं श्रीमन्मालिनिमन्त्रराज सहितं वन्देगुरोर्मण्डलं वन्देगुरु पदद्वन्द्वामवाङ्मनस गोचरं रक्तशुक्र प्रभामिश्र मतर्क्यं त्रैपुरंमहः ॥ श्री+नमः ॥

७ हंस शिवस्सोहं स्वरूपनिरूपणहेतवे कामेश्वरी अंबासमेत कामेश्वरानन्दनाथ स्वगुरु श्री+नमः ॥

७ सोहं हंस शिवः स्वच्छप्रकाश विमर्शहेतवे उमादेवी अंबा समेतपरमेश्वरानन्दनाथ परमगुरवे नमः श्री+नमः ॥

७ हंसः शिवस्सोहं सोहं हंसः शिवः स्वात्माराम परमानन्द पञ्जरविलीन तेजसे उमादेवी आंबासमेत सदाशिवानन्दनाथ परमेष्टिगुरवे नमः श्री+नमः ॥

७ मूलं परापरगुरुभ्यो नमः ।

गुरुं सन्निहितो । गुरौ गुरुं नत्वा । गन्ध पुष्पाक्षत कुङ्कुमानि अभ्यर्च्य गुरु पादुकामन्त्रेण अभिपूज्य । पात्राणि समर्पयेत् ॥

ஸ்ரீ பாத்திரத்திலிருந்து அமுதத்தை குரு பாத்திரத்தில் விட்டு இன்னும் நான்கு உத்தரணி விசேஷார்க்ய அமுதத்தை விட்டு குருவினிடம் சமர்ப்பிக்கவேண்டியது.

देवनाथ गुरुस्वामिन्देशिकात्मनापिका त्राहि त्राहि कृपाशंभ्यो पात्रं पूर्णतरं कुरु पात्रं पूर्णतरं कुरु ॥

हिरण्यपात्रं मधोः पूर्णंदधाति मधव्यो सनीति एकधा ब्रह्मण मुपहरति एकधैवयजमानः आयुस्तेजो दधाति । इति मन्त्रेणगुरुं समर्पयेत् ॥

आत्मपात्रम् ॥

குரு ஸ்வீகரித்தது போக பாக்கி அமிர்தத்தை நாம் இரண்டு கையினல் வாங்கிக்கொண்டு இத்துடன் இன்னும் நான்கு உத்தரணி விசேஷார்க்ய அமிர்தத்தை கலந்து கையில் வைத்துக்கொண்டு,

पुनः आत्मपात्रे किंचिद्विशेषार्घ्यमृतमुद्धृत्य, मूलाधारे बालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा

४ कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः । इति मनसासंपूज्य

४ मूलं पुण्यं जुहोमि स्वाहा     ४ मूलं सङ्कल्पं जुहोमि स्वाहा
४ मूलं पापं ,,     ४ मूलं विकल्पं ,,
४ मूलं कृत्यं ,,     ४ मूल धर्मं ,,
४ मूलं अकृत्यं ,,     ४ मूलं अधर्मं ,,

४ मूलं अधर्मं जुहोमि वौषट् ।

श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतिक्रमम् मण्डलं वीराद्यष्ट चतुष्कषष्टिनवकं वीरावली पञ्चकं श्रीमन्मालिनिमन्त्रराज सहितं वन्देगुरोर्मण्डलम् ॥ ततः हृदये

आत्मानंतर्पयामि ॥

अन्तरात्मानं तर्पयामि ॥

जीवात्मानं ,,

परमत्मानं ,,

इदं पवित्रं अमृतंपिबामि ॥

भवभेषजं पशुपाशसमुच्चयमिदं कारणं भैरवोदितं चित्तस्वातन्त्रिय सारतत्वात् तस्यानन्दमयतत्वतः । तत्मयत्वाच्छभाविनां भवत्यां ताहिंतारसे अहं तापत्रयमरितं इतं तं परमामृतं परं हन्तामयो वह्नौ जुहोमिशिवतत्वः ॥

४ अं+अः ऐं प्र प्रकृत्यहंकार बुद्धि मनस्त्वक्चक्षु श्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थ शब्दस्पर्शरूपरसगन्धाकाशवाय्वग्नि सलिलभूम्यात्मना चतुर्विंशति शुद्धा शुद्धतत्वात्मकं ऐं-प्र आत्मत्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामिजुहोमि स्वाहा होष्यामि जुहोति ॥ इति स्वीकृत्या ॥
*மறுபடியும் நான்கு உத்தரணி விசேஷார்க்யம் எடுத்துக் கொண்டு.*

४ कं+मं क्लीं द्रि मायाकलाविद्या रागकालनियति पुरुषात्मनासप्त शुद्धतत्वात्मकं क्लीं द्रि विध्यातत्वेन मायिकमलं शोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा ॥ होष्यामि जुहोति ॥ *ஸ்வீகரிக்க வேண்டியது. இன்னும் நான்கு உத்தரணி விசேஷார்க்யம் எடுத்துக் கொண்டு.*

४ यं+क्षं सौः त्रि शिवशक्ति सदाशिवेश्वर शुद्धविध्यात्मनापंच शुद्धतत्वात्मकं सौः त्रि शिवतत्वेन कार्मीकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमि स्वाहा होष्यामि । जुहोति ॥

என்று வீகரிஸ்க்கவேண்டியது. கடைசியாக இன்னும் நான்கு உத்தரணி விசேஷார்க்யம் எடுத்துக்கொண்டு

४ अं+क्षं ऐं-प्र क्ली ह्रि सौ लि प्रकृत्यहङ्कार बुद्धिमनस्त्वक्चक्षु श्रोत्रजिह्वा-घ्राण वाक्पाणिपादपायूपस्थ शब्दस्पर्शरूप रसगन्धाकाश वाय्वग्नि सलिल-भूमि मायाकलाविद्यारागकालनियति पुरुष शिवशक्ति सदाशिवेश्वर शुद्धविद्या स्थूलसूक्ष्म कारणदेहाश्रितं परशिवं ऐं क्लीं सौः सौः क्लीं ऐं मूलम् 16 सर्वतत्वेन सर्वं देहंसर्वदेहाभिमनिनं जीवात्मानं परिशोधयामिजुहोमि स्वाहा ॥ होष्यामि जुहोति

आर्द्रं ज्वलति ज्योतिरहमस्मि ।

ज्येतिर्ज्वलति ब्रह्माहमस्मि ।

सोहमस्मि ब्रह्माहमस्मि ।

अहमस्मि ब्रह्माहमस्मि ।

अहमेवाहंमां जुहोमि स्वाहा ॥

इति गुरौ संनिहिते होष्यामि

इति संप्रार्थ्य गुरोरनुज्ञांलब्ध्वा स्वशिरसिपात्रं निधाय आत्मपात्रं मण्डलं निक्षिपेत् । गुरुध्यानम् ॥

इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात् । विशे-षार्घ्यपात्रात्किंचित्क्षीरं कारणकलशे निक्षिपेत् ॥

மேலே பூஜை செய்வதற்கு சிரமமாக இருந்தால் இத்துடன் நிறுத்திக்கொண்டு விசேஷார்க்ய சாமான்கள் பாத்திரங்களை மூடிவிட்டு. ஆகாரம் செய்து சிரமபரிகாரம் செய்து கொண்டு ஷெ பூஜையை 4-மணிக்கு மேல் செய்யலாம் என்று என்னு டைய குருவின் ஆஞ்ஞை ஆனல் தீபங்கள் அணையாதபடி பார்த்துக் கொள்ளவேண்டும்.

---

द्वितीयभागः ॥

पञ्चमः खण्डः ॥

कामकला न्यासः ॥

இந்தந்யாஸத்தை அந்தர் யாகம் செய்யும்போது மாத்திரம் செய்யவேண்டியது.

गुरु ध्यानम् ॥ பாகம் 20-ம்

गुरु त्रयं । பக்கம் 27 & 24 (1. 2. 3.)

अस्यश्रीकामकला न्यासमहामन्त्रस्य नारदरिस्य प्रजापतय ऋषिः अनुष्टुफपङ्क्यः च्छदांसि महाविद्या महाकामकला महात्रिरस्कण्यो देवता ॥ ई बीजं ह्री शक्तिः ॥ क्लीं कीलकं । इष्टार्थे जपेविनियोगः ॥

क्यां इत्यादि करषडंगन्यासः ॥

ध्यानम् ॥

अग्रबिन्दु परिकल्पितामनामध्यबिन्दु युगलस्तनद्वयं
नादबिन्दु रसनाकला स्पदां नौमितेपरशिवेपरां कलाम् ॥
महामन्त्रराजान्तबींजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ॥
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥

लंइत्यादि पञ्चपूजा ॥

| | | | | |
|---|---|---|---|---|
| ४ प्र ई | कां | ईनमः | नासिके | ४ ई प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाम्ि श्री+नमः ॥ |
| ,, | ऐं | ,, | ललाटे | |
| ,, | ई | ,, | नेत्रयोः | |
| ,, | लां | ,, | श्रोत्रयोः | |
| ,, | ह्रीं | ,, | तात्वोः | |

| | |
|---|---|
| ४ ह्रिं ईं हां ईंनमः स्तनद्वयं<br>,, सां ,, बाहुद्वयं<br>,, कां ,, हृदये<br>,, हां ,, पार्श्वद्वयं<br>,, लां ,, नाभौ<br>,, ह्रीं ,, कटिद्वयं | ४ ईं ह्रि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्री+नमः ॥ |
| ४ ईं सां ईंनमः ऊरुद्वयं<br>,, कां ,, जानुद्वयं<br>,, लां ,, जंघद्वयं<br>,, ह्रीं ,, गुल्फद्वयं<br>,, श्रीं ,, पदद्वयं | ४ ईं त्रि । नादबिन्दु द्वयापरिकल्पि तपदाव्याद्धयाभिष्टेम बिन्दु युगलस्तनद्वयं श्री+नमः ॥ |

एवं त्रियावृत्या व्यापकं कुर्यात् ॥ विशेषमूल मन्त्रं जपेत् ॥

## अन्तर्यागः ॥

गुरु ध्यानम् ॥ பக்கம் 20 गुरु पादुकाध्या नम् ॥ பக்கம் 27 24 (1. 2. 3.)

महाषोडशीध्यानम् ॥ பக்கம் 46, 47-ல் 1 முதல் 7 ஸ்லோகம் முடிய

मूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेदिति । अथ हृदि श्रीचक्रं विभाव्य तत्र तामेव स्वीकृतप्रागुक्तरूपां श्रीदेवीं ध्यात्वां वयमाणैः गन्धादिताम्बूलान्तं षडुपचारमन्त्रैः उपचर्यं तां पुनस्तेजोरूपां परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिका स्वात्माभिन्नां परिचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदळकमलाद्ब्रह्मनासापुटेन निर्गतां त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमगर्भिते

अञ्जलौ समानीय ऐं ह्रीं श्रीं ह्रीं श्रीं सौः श्रीललिताया अमृतचैतन्यमूर्तिं कल्पयामि नमः इति मन्त्रमुच्चारयन् निजलीलाऽङ्गीकृतललितवपुषं विचिन्त्य—ऐं ह्रीं श्री ह्सै ह्स्क्ह्रीं ह्सौः।



हृदिश्रीचक्रं विभाव्य ॥

ओं बिन्दु त्रिकोणसंयुक्तं वसुकोणसमन्वितम् ।
दशकोणद्वयोपेतं भुवनारससमन्वितम् ॥
दलाष्टक समोपेतं दलषोडशकान्वितम् ।
वृत्तत्रय समन्वितं भूमिसदनत्रय शोभितम् ॥
नमामिललिता चक्रं भक्तानांमिष्टदायकम् ।

॥ श्रीत्रिपुरसुन्दरी चक्रराजस्तवः ॥

१ कर्तुं देवि जगद्विलासविधिना सृष्टेन ते मायया
सर्वानन्दमयेन मध्यविलसत्श्रीबिन्दुनालंकृतम् ।
श्रीमत्सद्गुरुपूज्यपादकरुणासंवेद्यतत्त्वात्मकं
श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥

२ एकस्मिन्नणिमादिभिर्विलसितं भूमीगृहे सिद्धिभिः
ब्रह्माद्याभिरुपाश्रितं च दशभिर्मुद्राभिरुद्भासितम् ।
चक्रेश्याप्रकटेड्यया त्रिपुरया त्रैलोक्यसम्मोहनं–श्रीचक्रम्....

३ ईड्याभिर्नव विद्रुमच्छविसमाभिख्यपभिरङ्गीकृतं
कामाकर्षणिकादिभिः स्वरदले गुप्तभिधर्षाभिः सदा ।
सर्वाशापरिपूरके परिलसद्देव्या पुरेश्या युतं–श्रीचक्रम्....

४ लब्धप्रोज्वल यौवनाभिरभितोनङ्ग प्रसूनादिभिः
सेव्यं गुप्ततरसुन्दभिरष्टकमले संक्षोभकाख्ये सदा
चक्रेश्या पुरसुन्दुरीति जगति प्रख्यातया संगतं - श्रीचक्रम्....

५ ह्रींङ्काराङ्कितमन्त्रराजनिलयं श्रीसर्व संक्षोभिणी
मुख्याभिश्चलकुन्तलाभिरुचितं मन्वश्रचक्रे शुभे ।
यत्र श्रीपुरवासिनी विजयते श्रीसर्वसौभाग्यदे - श्रीचक्रम्....

६ हस्ते पाशगदादि शस्त्रनिचयं दीप्तं वहन्तीभिरु-
त्तीर्णाख्याभिरुपास्यतिशुभदे सर्वार्थसिद्धिप्रदे ।
चक्रे बाह्यदशारके विलसितं देव्या पुरश्र्याख्यया - श्रीचक्रम्....

७ सर्वज्ञादिभिरिन्दुकान्ति धवलाकाराभिरारक्षिते
चक्रेन्तर्दशकोणकेतिविमले नाम्ना च रक्षाकरे ।
यत्र श्रीपुरमालिनी विजयते नित्यं निगर्भास्तुता - श्रीचक्रम्....

८ कर्तुं सूकमनर्गलस्तुवदतिद्राक्षादिवाग्वैभव
द्राक्षाभिर्वशिनी मुखाभिरभितो वाग्देवताभिर्युतम् ।

अष्टारे पुरसिद्धया विलसितं रोगप्रणाशे शुभं - श्रीचक्रम्....

९ हन्तुं दानवसंघमाहवभुवि स्वेच्छासमाकल्पितैः
शस्त्रैरस्त्रचयैश्च चापनिवहैरत्युग्रतेजोभरैः ।
आर्तत्राणपरायणैररिकुलप्रध्वंसिभिस्संवृतं - श्रीचक्रम्....

१० लक्ष्मीवागगजात्मभिः करलसत्पाशासिघण्टादिभिः
कामेश्यादिभिरावृतं शुभकरं श्रीसर्वसिद्धिप्रदम् ।
चक्रेशी च पुरांबिका विजयते यत्र त्रिकोणे मुदा - श्रीचक्रम्....

११ ह्रीङ्कारं परमं जपद्भिरनिशं मित्रेशनाथादिभि-
र्दिव्यौघैर्मनुजौघसिद्धनिवहैः सारूप्यमुक्तिं गतैः ।
नानामन्त्ररहस्यविद्भिरखिलैरन्वासितं योगिभिः—श्रीचक्रम्....

१२ सर्वोत्कृष्टवपुर्धराभिरभितो देवीसभाभिर्जग-
त्संरक्षार्थमुपागताभिरसकृन्नित्याभिधाभिर्मुदा ।
कामेश्यादिभिराज्ञयैव ललितादेव्याः समुद्भासितं—श्रीचक्रम्....

१३ कर्तुं श्रीललिताङ्गरक्षणविधिं लावण्यपूर्णां तनू-
मास्थायास्त्रवरोल्लसत्करपयोजाताभिरध्यासितम् ।
देवीभिर्हृदयादिभिश्च परितो बिन्दुं सदानन्ददं—श्रीचक्रम्....

१४ लक्ष्मीशादिपदैर्युतेन महता मञ्चेन संशोभितं
षट्त्रिंशद्भिरनर्घरत्नखचितैः सोपानकैर्भूषितम् ।
चिन्तारत्नविनिर्मितेन महता सिंहासनेनोज्ज्वलं—श्रीचक्रम्....

१५ ह्रीङ्कारैकमहामनुं प्रजपता कामेश्वरेणार्पितं
तस्याङ्के च निषण्णया त्रिजगतां मात्रा चिदाकारया ।
कामेश्या करुणारसैकनिधिना कल्याणदात्र्यायुतं—श्रीचक्रम्....

१६ श्रीमत्पञ्चदशाक्षरैकनिलयं श्रीषोडशीमन्दिरं
श्रीनाथादिभिरर्चितं च बहुधा देवैः समाराधितम् ।

श्रीकामेशरहस्सखीनिलयलयनं श्रीमद्गुहाराधितं
श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥

इति श्रीमत्त्रिपुरसुन्दरी चक्रराजस्तवः ॥

इति श्रीचक्रराजस्थं विभाव्य ॥

धरणी सदनत्रय धरणी वृत्तत्रय सर्वाशापरिपूरकचक्र सर्वसंक्षोभण-चक्र सर्वसौभाग्यदायकचक्र सर्वार्थसाधकचक्र सर्वरक्षाकरचक्र सर्वरोगहरचक्र सर्वसिद्धिप्रदचक्र परब्रह्मचक्र सर्वानन्दमयचक्र सहिता समस्तदिव्यचक्र सृष्टि-स्थित्यन्तकारिणि एषामुद्राशक्ति ब्राह्मयाध्यष्टमातृशक्ति प्रकटयोगिनि अणिमाद्यष्टसिद्धिशिवशक्ति विष्णुशक्ति ब्रह्मशक्ति गुप्तयोगिनि गुप्ततरयो-गिनि संप्रदाययोगिनी कुलोत्तीर्णयोगिनी निगर्थयोगिनी रहस्ययोगिनी परा-पररहस्ययोगिनी प्रदिपदाति तिथिरूपिणी दशावतारदेवी मन्त्रिणी दण्डनाथ-सहिता महालक्ष्मी महासरस्वती समेता परापररहस्ययोगिनी समेता सर्वा-नन्दमयबैन्दवचक्रे परब्रह्मस्वरूपिणी परामृतशक्ति सर्वमन्त्रेश्वरी सर्वयन्त्रे-श्वरी सर्वविश्वेश्वरी सर्वयोगेश्वरी सर्वसिद्धेश्वरी सकलजकत्युत्पतिस्थिति संहा-रमातृका श्रीललीतामहाभट्टारिका श्रीराजराजेश्वरी श्रीचक्रराज संराज्ञी महामाहेश्वरी महामहाराज्ञि महामहाशक्ति महामहागुप्ते महामहाज्ञप्ते महा-महानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसंराज्ञि नमस्ते नमस्ते श्रीमहात्रिपुरसुन्दरि ॥ श्री ललितांबिकायै नमः ॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥

ततो गत्वा ज्वा ज्योत्स्नामयसमयलोकं समयिनां
पराख्या सादाख्या जयति शिवतत्त्वेन मिलिता ।

सहस्रारे पद्मे शिशिरमहसां बिम्बमपरं
तदेव श्रीचक्रं सरथमिति तद्वैन्दवमिति ॥

## ॥ श्रीचक्रोपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथा ह वै चक्रे नित्यकान्ते ॥ १ ॥ गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ २ ॥ प्रत्यहं सप्तशतिं सहस्रं कलशान् स्थाप्य शतं वा नव वा सर्वाभावे पूर्णाभिषेकं चरेत् ॥ ३ ॥ अष्टाष्टकं चरेत् । पञ्चपञ्चकं वा चरेत् । सर्वाभावे शतं वा पूजयेत् । अमृतत्त्वं गच्छति ॥ ४ ॥ *श्रीचक्रन्यासं चरेत् । स व्यापकत्वं गच्छति ॥ ५ ॥ मूलाधाराद् बिलान्तं क्रमेण न्यसेत् । स्वराट्चक्रं विराट्चक्रं सम्राट्चक्रं विराज्यचक्रं विश्वरूपचक्रं शत्रुजिच्चक्रं क्रमेण सप्तकलामयं न्यसेत् । स शिवो भवति । स कविर्भवेत् । स सर्वसिद्धीश्वरो भवेत् स भुवनाराधितो भवेत् ॥ निर्विकल्पेन मनसा यश्चरेत् शक्तिदेहे स कालीरूपो भवेत् । विना शक्तिं न मोक्षः, न ज्ञानं, न सत्यं, न धर्मः, न तपः, न हरिः न हरः, न विरिञ्चिः । सर्वं शक्तियुक्तं भवेत् । तत्संयोगात् सिद्धीश्वरो भवेत् इतिशिवम् ॥ ओं भद्रं कर्णेभिरिति शान्तिः ॥

## ॥ अरुणोपनिषत् ॥

ओं भद्रं कर्णेभिरिति शान्तिः ॥

पृश्नयो नाम मुनयः सर्वे चक्रसमाश्रयाः । सेवमानाश्चक्रविद्यां देवगन्धर्वपूजताम् ॥ अग्नीषोमात्मकं चक्रमग्नीषोममयं जगत् । अग्नावन्तर्बभौ

* भवनोपनिषत् प्रयोगः कृत्वा अथवा श्रीचक्रं न्यासं कृत्वा ॥

भानुरग्नीषोममयं स्मृतम् ॥ त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम् । त्रिकोणं बैन्दवं सौम्यमष्टकोणं च मिश्रकम् ॥ चक्रं चन्द्रमयं चैव दशारद्वितयं तथा । चतुर्दशारं वह्नेस्तु चतुश्चक्रं च भानुमत् ॥ एतत्प्रसादादिन्द्राद्या वसवोऽष्टौ मरुद्गणाः । ये ये समृद्धा लोकेऽस्मिन् त्रिपुराचक्रसेवका । पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम् । महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते सदाशिवः॥ इमा नुकं भुवना सीषधेम ॥ १ ॥ इन्द्रश्च विश्वे च देवाः ॥ २ ॥ यज्ञं च नस्तत्वं च प्रजां च । आदित्यैरिन्द्रः सह सीषधातु ॥ ३ ॥ आदित्यैरिन्द्रः सगणो मरुद्भिः । अस्माकं भूत्ववितः तनूनाम् । ४ । आप्लवस्व प्रप्लवस्व । ५ आण्डी भव ज मा मुहुः ॥ ६ ॥ सुखादीन्दुः खनिधनाम् ॥ ७ ॥ प्रति मुञ्चस्व स्वां पुरम् ॥ ८ ॥ मरीचयः स्वायंभुवाः ॥ ९ ॥ ये शरीराण्यकल्पयन् ॥ १० ॥ ते ते देहं कल्पयन्तु ॥ ११ ॥ मा च ते ख्यास्म तीरिषत् ॥ १२ ॥ उत्तिष्ठत मा स्वप्त । अग्निच्छध्वं भारताः । राज्ञः सोमस्य तृप्तासः । सूर्येण सयुजोषसः ॥ १३ ॥ युवा सुवासाः ॥ १४ ॥ अष्टाचक्रा नवद्वारा ॥ १५ ॥ देवानां पूरयोध्या । १६ । तस्यां हिरण्मयः कोशः । स्वर्गो लोको ज्योतिषावृतः यो वै तां ब्रह्मणो वेद । अमृतेनावृतां पुरीम् । तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥ १८ ॥ विभ्राजमानां हरिणीम् । यशसा संपरीवृताम् । पुरं हिरण्मयीं ब्रह्मा । विवेशापराजिता ॥ १९ ॥ पराङेत्यज्यामयी । पराङेत्यनाशकी ॥ २० ॥ इह चामुत्र चान्वेति । विद्वान् देवासुरानुभयान् ॥ २१ यत्कुमारी मन्द्रयते । यद्योषिद्यत्पतिव्रता । अरिष्टं यत्किंचित्क्रियते । अग्निस्तदनुवेदधति ॥ २२ ॥ अश्रृतासः श्रृतासश्च । यज्वानो येऽप्ययज्वनः । स्वर्यन्तो नापेक्षन्ते ॥ २३ ॥ इन्द्रमग्निं च ये विदुः । सिकता इव संयन्ति । रश्मिभिः समुदीरिताः । अस्माल्लोकादमुष्माच्च ॥ २४ ॥ ऋषिभिरदात् पृश्निभिः ओं भद्रं कर्णेभिरिति शान्तिः ॥

॥ इत्यरुणोपनिषत् ॥

देवी अथर्वशिर उपनिषत् ॥

ओं भद्रं कर्णेभिरिति शान्तिः ॥

ओं, सर्वे वै देवीमुपतस्थुः कासि त्वं महादेवि ॥ १ ॥ सा अब्रवीदह ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत् शून्यं चाशून्यं च। अहमानन्दानानन्दाः। विज्ञानाविज्ञानेऽहम्। ब्रह्माब्रह्माणी वेदितव्ये। इत्याहाथर्वणी श्रुतिः ॥ २ ॥ अहं पञ्चभूतान्यपञ्चभूतानि। अहमखिलं जगत्। वेदोऽहम्, अवेदोऽहम्। विद्याहम्, अविद्याहम्। अजाहम्, अनजाहम्। अधश्चोर्ध्वं च तिर्यक् चाहम् ॥ ३ ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणावुभौ बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ ॥ ४ ॥ अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम्। विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ५ ॥ अहं ददामि द्रविणं हविष्मते सुप्राव्ये ये यजमानाय सुन्वते। अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन ॥ ६ ॥ मम योनिरप्स्वन्तः समुद्रे य एवं वेद स देवीपदमाप्नोति ॥ ७ ॥ ते देवा अब्रुवन् नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ८ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ॥ ९ ॥ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुष्टुतैतु ॥ ०॥ कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्। सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ॥ ११ ॥ महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवीः प्रचोदयात् ॥ १२ ॥ अदितिरिह जनिष्ट दक्षया दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ १३ ॥ कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरूच्येषाविश्वमातादिविद्योम् ॥ १४ ॥ एषा आत्मशक्तिः। एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या। १५। य एवं वेद स शोकं तरति। नमस्ते अस्तु भगवति भवति मातरस्मान् पातु सर्वतः ॥ सैवाष्टौ वसवः। सैवैकादश रुद्राः ।

सैषा द्वादशादित्याः । सैषा विश्वे देवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरज स्तमांसि । सैषा प्रजापतीन्द्रिमनवः सैषा ग्रहनक्षत्रज्योतीषि कलाकाष्ठादिकालरूपिणी । तामहं प्रणौमि नित्यम् ॥ तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् । अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ।१९। वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ।२०। एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः । ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ २१ ॥ वाङ्मायाब्रह्मभूस्तस्मात् षष्ठं वक्त्रसमन्वितम् । सूर्योऽवामश्रोत्रबिन्दुः संयुतष्टात्तृतीयकम् ॥ २२ ॥ नारायणेन संयुक्तो वायुश्चाधरसंयुतः । विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ॥ २३ ॥ हृत्पुडरीकमध्यस्थां प्रातः सूर्यसमप्रभाम् । पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ॥ त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ॥ २४ ॥ नमामि त्वामहं देवीं महाभयविनाशिनीम् । महादुर्गप्रशमनीं महाकारुण्यरूपिणीम ॥ २५ ॥ यस्याः स्वरूपं ब्रह्मादयोऽपि न जानन्तिः तस्मादुच्यतेऽज्ञेया । यस्या अन्तो न विद्यते; तस्मादुच्यतेऽनन्ता । यस्या ग्रहणं नोपलभ्यते; तस्मादुच्यतेऽलक्ष्या । यस्या जननं नोपलभ्यते; तस्मादुच्यतेऽजा एकैव सर्वत्र वर्तते; तस्मादुच्यते एका । एकैव विश्वरूपिणी; तस्मादुच्यते नैका । अत एवोच्यते, अज्ञेया, अनन्ता, अलक्ष्या, अजा, एका, नैका, इति ॥ २६ ॥ मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी । ज्ञानानां चिन्मयातीत शून्यानां शून्यसाक्षिणी ॥ २७ ॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता । तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् । नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ २८ ॥ इदमथर्वशीर्षं योऽधीते, स पञ्चाथर्वशीर्षजपफलमवाप्नोति । इदमथर्वशीर्षं ज्ञात्वा योऽर्चां स्थापयति ॥ २९ ॥ शतलक्षं प्रजप्त्वापि नार्चासिद्धिं च विन्दति । शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥ ३० ॥ दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्याते । महादुर्गाणि तरति महादेव्याः तरति महादेव्याः प्रसादतः ॥ ३१ ॥ प्रातरधीयनो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्

सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति। निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति। प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति। भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति, य एवं वेदेत्युपनिषत् ॥ ३२ ॥ ओं भद्रं कर्णेभिरिति शान्तिः

॥ इति देव्युपनिषत्समाप्ता ॥

## भावनोपनिषत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत्। ॐ श्रीगुरुः सर्वकारणभूता शक्तिः। तेन नवरन्ध्ररूपो देहः। नवशक्तिरूपं श्रीचक्रम्। वाराही पितृरूपा। कुरुकुल्ला बलिदेवता माता। पुरुषार्थाः सागराः। देहो नवरत्नद्वीपः। आधारनवकमुद्राः शक्तयः त्वगादिसप्तधातुभिरनेकैः संयुक्ताः संकल्पाः कल्पतरवः। तेजः कल्पकोद्यानम् रसनया भाव्याना मधुराम्लतिक्तकटुकषायलवणभेदाः षड्साः षड्तवाः। क्रियाशक्तिः पीठम्। कुण्डलिनी ज्ञानशक्तिर्गृहम्। इच्छाशक्तिर्महात्रिपुरसुन्दरी ज्ञाता होता ज्ञानमग्निः ज्ञेयं हविः। ज्ञातृज्ञानज्ञेयानामभेदभावन श्रीचक्रपूजनम्। नियतिसहिताः शृङ्गारादादयो नव रसा अणिमादयः। कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमयाः ब्राह्मयाद्यष्ट शक्तयः। पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थमनोविकाराः षोडश शक्तयः। वचनादानगमनविसर्गानन्दहानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ। अलम्बुसा कुहूर्विश्वोदरी वरुणा हस्तिजिह्वा यशस्वत्यश्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः। सर्वसंक्षोभिण्यादिचतुर्दशारगा देवताः। प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनंजया इति दश वायवः। सर्वसिद्धिप्रदा देव्यो बहिर्दशारगादेवताः। एतद्वायुदशकसंसर्गोपाधिभेदेन रेचकपूरकशोषकदाहकप्लावका अमृतमिति प्राणमुख्यत्वेन पञ्चविधोऽस्ति। क्षारको दारक क्षोभको मोहको जृम्भक इत्यपालनमुख्यत्वेन पञ्चविधोऽस्ति। तेन मनुष्याणां मोहको दाहको भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं चतु-

विषमन्नं पाचयति । एता दश वह्निकलाः सर्वज्ञत्वाद्यन्तर्दशारगा देवताः । शीतोष्णसुखदुःखेच्छासत्त्वरजस्तमोगुणा वशिन्यादिशक्तयोऽष्टौ । शब्दस्पर्श-रूपरसगन्धाः पञ्चतन्मात्राः पञ्च पुष्पबाणामन इक्षुधनुः । वश्यो बाणो रागः पाशः । द्वेषोऽङ्कुशः । अव्यक्तमहत्तत्त्वमहदहंकार इति कामेश्वरी-वज्रेश्वरी-भागमालिन्योऽन्तस्त्रिकोणाग्रगा देवताः । पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनस्थितिः पञ्चदशनित्याः । श्रद्धानुरूपा धीर्देवता । तयोः कामेश्वरी सदानन्दघना परिपूर्णस्वात्मैक्यरूपा देवता । सलिलमिति लौहित्यकारणं सत्त्वम् । कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः । अस्ति नास्तीति कर्तव्यतानूपचारः । बाह्याभ्यन्तः करणानां रूपग्रहणयोग्यतास्त्वित्यावाहनम् । तस्य बाह्याभ्यन्तः करणानामेकरूपविषयग्रहणमासनम् । रक्तशुक्लपदैकीकरणं पाद्यम् । उज्ज्वलदामोदानन्दासनदानमर्घ्यम् । स्वच्छं स्वतः सिद्धमित्याचमनीयम् । चिच्चन्द्रमयीति सर्वाङ्गस्रवणं स्नानम् । चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रम् । प्रत्येकं सप्तविंशतिधाभिन्नत्वेनेच्छाज्ञानक्रियात्मकब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी ब्रह्मसूत्रम् । स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणम् । सच्चित्सुखपरिपूर्णतास्मरणं गन्धः । समस्तविषयाणां मनसः स्थैर्येणानुसंधानं कुसुमम् । तेषामेव सर्वदा स्वीकरणं धूपः । पवनावच्छिन्नोर्ध्वज्वलनसच्चिदुल्काकाशदेहो दीपः । समस्तयातायातवर्ज्यं नैवेद्यम् । अवस्थात्रयाणामेकीकरणं ताम्बूलम् । मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्यम् । तुर्यावस्था नमस्कारः । देहशून्यप्रमातृतानिमज्जनं बलिहरणम् । सत्यमस्ति कर्तव्यमकर्तव्यमौदासीन्यनित्यात्मलापनं होमः । स्वयं तत्पादुकानिमज्जनं परिपूर्णध्यानम् । एवं मुहूर्तत्रयं भावनापरो जीवन्मुक्तो भवति । तस्य देवतात्मैक्यसिद्धिः । चिन्तितकार्याण्ययत्नेन सिद्ध्यन्ति । स एव शिवयोगीति कथ्यते । कादिहादिमतोक्तेन भावना प्रतिपादिता । जीवन्मुक्तो भवति । य एवं वेद । इत्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥

इत्यथर्वणवेदे भावनोपनिषत्संपूर्णा ॥

॥ श्रीः ॥

# कौलोपनिषत् ।

शन्नः कौलिकः शन्नो वारुणौ शन्नः शङ्खिः शन्नोः शन्नोऽग्निश्शन्नः सर्वं समभवत् । नमो ब्रह्मणे नमः पृथिव्यै नमोऽद्भ्यो नमोऽग्नये नमो वायवे नमो गुरुभ्यः । त्वमेव प्रत्यक्षं सैवासि । त्वामेव प्रत्यक्षं तां वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः । अथातो धर्म्मजिज्ञासा । ज्ञानं बुद्धिश्च । ज्ञानं मोक्षैककारणम् । मोक्षस्सर्वात्मतासिद्धिः । पञ्च विषया प्रपञ्चः । तेषां ज्ञानस्वरूपाः । योगो मोक्षः । अधर्म्मकारणाज्ञानमेव ज्ञानम् । प्रपञ्च ईश्वरः । अनित्यं नित्यम् । अज्ञानं ज्ञानम् । अधर्म्म एव धर्म्मः । एष मोक्षः । पञ्च बन्धा ज्ञानस्वरूपाः । पिण्डाज्जननम् तत्रैव मोक्षः । एतज्ज्ञानम् । सर्वेन्द्रियाणां नयनं प्रधानम् । धर्म्मविरुद्धाः कार्य्याः । धर्म्मविहिता न कार्य्याः । सर्वं शाम्भवीरूपम् । आम्नाया न विद्यन्ते । गुरुरेकः । सर्वैक्यताबुद्धिमन्ते । आमन्त्रसिद्धेः । स्वदादिस्त्याज्यः । प्राकट्यं कुर्यात् प्राकट्यं न कुर्य्यात्पशुसम्भाषणम् । अन्यायोन्यायः । गणयेत्कमपि । आत्मरहस्यं न वदेत् । शिष्याय वदेत् । अन्तः शाक्तः । बहिः शैवःलोके वैष्णवः । अयमेवाचारः । आत्मज्ञानान्मोक्षः । लोकान्न निन्द्यात् । इत्यध्यात्मम् । व्रतं न चरेत् । न तिष्ठेन्नियमेन । नियमान्न मोक्षः । कौलप्रतिष्ठां न कुर्य्यात् । सर्वसमो भवेत् । स मुक्तो भवति । पठेदेतानि सूत्राणि प्रातरुत्थाय देशिकः । आज्ञासिद्धिर्भवेत्तस्य इत्याज्ञा पारमेश्वरी ॥ यश्चाचारविहीनोऽपि यो वा पूजां न कुर्वते । यदि ज्येष्ठं नन्दते नन्दने वने ॥

शन्नः कौलिकः । ० ।

ओं शान्तिः शान्तिः शान्तिः ॥

॥ कौलोपनिषत्समाप्ता ॥

श्रीः ।

॥ त्रिपुरोपनिषत् ॥

॥ ओम् वाङ्मे मनसीति शान्तिः ॥

ओं वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारमवतुवक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

तिस्रः पुरस्त्रपथा विश्वचर्षणी अत्राकथा अक्षराः सन्निविष्टाः। अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम् ॥ १ ॥ नवयोनीर्नव चक्राणि दीधिरे नवै वयोगा नव योगिनीश्च। नवानां चक्रा अधिनाथा स्योना नव भद्रा नव मुद्रा महीनाम् ॥ २ ॥ एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनत्रिंशत् ॥ चत्वारिंशदथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥ ३ ॥ ऊर्ध्वज्वलज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत् ॥ आनन्दनं मोदनं ज्योतिरिन्दोरेता उवै मण्डला मण्डयन्ति ॥ ४ ॥ यास्तिस्रो रेखाः सदनानि भूस्त्रीस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाराः। एतत्पुरं पूरकं पूरकाणां मत्रः प्रथेते मदनो मदन्या ॥ ५ ॥ मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता। लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६ ॥ इमां विज्ञाय सुधया मतन्ति परिस्रुता तर्पयन्तः स्वपीठम् ॥ नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७ ॥ कामो योनिः कमला वज्रापाणिर्गुहा हसा मातरिश्वाऽभ्रमिद्रः ॥ पुनर्गुहा सकला मायया च पुरूच्येषा निश्वमाताऽऽदिविद्या ॥ ८ ॥ षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमावेशयन्तः ॥ कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥ ९ ॥ त्रिविष्टपं त्रिमुखं विश्वमातुर्नवरेखाः स्वरमध्यं तदेषा। बृहत्तिथीर्दशपञ्चादिनित्या सा षोड़शो पुरमध्यं बिभर्त्ति १० यद्वा मण्डलाद्वा स्तना बिम्बमेकं मुखं चास्त्रीणि गुहा सदनानि ॥ कामी कलां काम्यरूपां चिकित्वा नरो जायते कामरूपश्च कायः ॥ ११ ॥ परिस्रुतं

झषमांजं फलं च भक्तानि योनीः सुपरिष्कृतानि । निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृते सिद्धिमेति ॥ १२ ॥ सृण्येव सितया विश्वचर्षणिः पाशेनैव प्रतिबध्नात्यभीकान् ॥ इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥ १३ ॥ भगः शक्तिर्भगवान काम ईश उभा दाताराविह सौभगानाम् । समप्रधानौ समसत्त्वौ समोजैतयोः शक्तिरजरा विश्वयोनिः ॥ १४ ॥ परिस्रुता हविषा भावितेन प्रसंकोचे गलिते वैमनस्कः । शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ २५ ॥ इयं महोपनिषत्त्रैपुर्या यामक्षयं परमो गीर्भिरीट्टे । एषर्ग्यजुः परमेतच्च सामायमथर्वेयमन्या च विद्या ॥ १६ ॥ ओं ह्वीमो ह्वीमित्युपनिषत् ॥ ओं वाङ्मे मनसीति शान्तिः ॥ हरिः ओं तत्सत् ॥

इति श्रीत्रिपुरोपनिषत्समाप्ता ॥

## ॥ बह्वृचोपनिषत् ॥

ओं वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ देवी ह्येकाग्र एवासीत । सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते । तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वेमरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वशाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत्प्राणि स्थावरजङ्गमं मनुष्यमजीजनत् ॥

सैषा परा शक्तिः । सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा । रहस्यमोमों वाचि प्रतिष्ठा । सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरासङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः । सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्तिर्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैवविभाति । यदस्ति सन्मात्रम् । यद्वि-

भाति चिन्मात्रम् । यत्प्रियमानन्दं तदेतत्पूर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वविश्वं सर्वदेवता । इतरत्सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म । पञ्चरूपपरित्यागादथर्वरूपप्रहाणतः । अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति । प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते । तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती वा सावित्री गायत्री सरस्वती ब्रह्मानन्दकलेति । ऋचो अक्षरे परमे व्योमन् । अस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासते ॥ इत्युपनिषत् ॥ ओं वाङ्मे मनसीति शान्तिः ॥ हरि ओं तत्सत् ॥

I मूलाधारादधोगते अकुलसहस्रारे भूपुरस्थितदेवीः,

क्रमेण शुक्ल अरुण पीत वर्णरेखात्रयस्य लकारप्रकृतिक प्रथिव्यात्मकस्य चतुरस्रस्य प्रवेशरीत्या प्रथमरेखायां पश्चिमादिद्वारचतुष्टयदक्षिणभागेषु वायव्यादिकोणेषु च पश्चिमनैर्ऋतयोः पूर्वैशानयोश्च मध्ये क्रमेण ॥

४ अं आं सौः लं त्रैलोक्यमोहनचक्राय त्रिभूपुरचक्राय प्रथमचतुरश्ररेखायै नमः ॥

| | |
|---|---|
| ४ अं अणिमा सिद्धि श्रीनमः | ४ प्रां प्राकाम्य सिद्धि श्रीनमः |
| ४ लं लघिमा ,, | ४ भुं भुक्ति ,, |
| ४ मं महिमा ,, | ४ इं इच्छा ,, |
| ४ ईं ईशित्व ,, | ४ प्रां प्राप्ति ,, |
| ४ वं वशित्व ,, | ४ सं सर्वकाम ,, |

ध्यानम् ॥

एतारक्तप्रभाचिन्तामणिरत्नाभयांचिता ।
त्रिलोचनाश्चरूकलामैलीध्यायेद्भीष्टदाः ॥

४ अं आं सौ लंत्रैलोक्यमोहनचक्रायत्रिभूपुरचक्रायद्वितीय मध्य चतुरश्र अरुणरेखायै नमः ॥

४ अं अं असितांग भैरवसमेत अं कं+ङं आं ब्राह्मी मातृदेवी श्री+नम
४ इं रुं रुरु ,, इं चं+क्षं ईं महेश्वरी ,,
४ उं छं छण्ड ,, उं टं+णं ऊं कौमारी ,,
४ ऋं क्रों क्रोध ,, ऋं तं+नं ॠं वैष्णवी ,,
४ ऌं उं उन्मत्त ,, ऌं पं+मं ॡं वाराही ,,
४ एं कं कपाली ,, एं यं+वं ऐं माहेन्द्री ,,
४ ओं भीं भीषण ,, ओं शं+सं औं चामुण्डा ,,
४ अं सं सहार ,, अः हं+क्षं अः महालक्ष्मी ,,

ध्यानम् ॥

एतावंशदलश्यामाकपालोत्फलधारिणी ।
बन्धूकपरिधाद्याश्चध्यायेत्ब्राह्मयादिमातरः ॥

४ अं आं सौः लं त्रैलोक्यमोहनचक्रायत्रिभूपुरचक्रायत्रितीय चतुरश्रपीतरेखायै नमः ॥

४ द्रां सर्वसंक्षोभिणी मुद्राशक्ति श्री+नमः
४ द्रीं सर्वविद्राविणी ,,
४ क्लीं सर्वाकर्षिणी ,,
४ ब्लूं सर्ववशङ्करी ,,
४ सः सर्वोन्मादिनी ,,
४ क्रों सर्वमहाङ्कुशा ,,

४ ह्स्ख्फ्रें सर्वखेचरी मुद्राशक्ति श्री+नम

४ ह्सौः सर्वबीजा ,,

४ ऐं सर्वयोनि ,,

४ ह्सैं ह्स्क्ल्रीं ह्सौः सर्वत्रिखण्डा ,,

ध्यानम् ॥

एतारक्तवराभीतिपाशाङ्कुशचतुर्भुजा ।
रक्तांगीरक्तवसनास्संक्षोभिण्यादिशक्तयः ॥

४ अं आं सौः त्रिपुराचक्रेश्वरीदेवी श्री+नमः ॥

४ अं अणिमासिद्धि श्री+नमः

द्रां सर्वसंक्षोभिणीमुद्राशक्ति श्री+नमः

द्रां सर्वसंक्षोभिणीमुद्रां प्रदर्श्य ॥

७ मुलम्<br>16 एताः प्रकटयोगिन्यः त्रैलोक्यमोहनचक्रेसचक्राः सासनाः समुद्राः सिद्धयः सशक्तयः सायुधाः सवाहनाः सपरिवाराः सालंकाराः सचक्रेश्वर्यः परया अपरया परापरया सपर्यया सर्वोपचारैः संपूजिताः संतर्पिताः सन्तुष्टिताः सन्तु इति हृदय श्रीचक्र मध्यस्थित देविपादारमूले पूजासमर्पणम् ॥ इति विभाव्या ॥

४ शृङ्गाररसात्मिकां ध्यायेत् ॥

४ श्रीललितामहात्रिपुसुन्दर्यैनमः त्रिवारं अर्चयेत् ॥ इति विभाव्य ॥

४ समस्तप्रकटयोगिनीमयूखा श्री+नमः ॥

४ जीवात्मानं आवरणानी सहितपुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्ते पूजा समर्पणं विभाव्य ॥

४ जीवात्मानं आवरणानिसहितहृदय श्रीचक्रमध्यस्थित देवीपादारमुले-विलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

II तदुपरिस्थितेविषुवनांनि रक्तवर्णषड्दलपद्मे षोडशदलदेवी:
श्वेतवर्णम् ॥

सकारप्रकृतिक षोडशदलपद्मात्मक चन्द्रस्वरूपे स्रवदमृतरसे षोडशदलकमलेदेव्याग्रदलमारभ्यवामावृत्तेन ॥

४ ऐं क्लीं सौ सं सर्वशापरिपूरकचक्रायषोडशदल चक्राय नमः ॥

४ अं कामा कर्षिणी नित्याकलादेवी श्री+नम ॥

४ आं बुद्धया ,,

४ इं अहं कारा ,,

४ ईं शब्दा ,,

४ उं स्पर्शा ,,

४ ऊं रूपा ,,

४ ॠं रसा ,,

४ ॠं गन्धा ,,

४ लं चित्ता ,,

४ ॡं धैर्या ,,

४ एं स्मृत्या ,,

४ ऐं नामा ,,

४ ओं बीजा ,,

४ औं अत्मा ,,

४ अं अमृता ,,

४ अः शरीरा ,,

ध्यानम् ॥

४ एताध्याये त्कलादेवी पाशंकुशकरांबुजा ॥
रक्तांगी रक्तवसना सर्वाभरणाभूषिताः ॥

४ ऐं क्लीं सौः त्रिपुरेश्वरीचक्रेश्वरी (कामाकर्षिणिपुरतः) श्री+नमः

४ लं लघिमासिद्धि श्री+नमः ।

४ द्रीं सर्वविद्राविणीमुद्राशक्ति श्री+नमः

४ द्रीं सर्वविद्राविणी मुद्रांप्रदर्श्य ॥

७ मूलम् एताः गुप्तयोगिन्यः सर्वाशापरिपूरक चक्रेसचक्राः सासनाः
16

....+ सन्तुःति हृदि श्रीचक्रमध्यस्थित देवीपदारमूलेपूजासमर्पणम् ॥ इति विभाव्य ॥

४ वीररसात्मिकां ध्यात्वा ॥

४ श्रीललितामहात्रिपुरसुन्दरी श्री+नमः ॥ त्रिवारम्

७ मूलम् समस्तगुप्तयोगिनीमयूखा श्री+नमः ॥
16

४ जीवात्मनं आवरणानिसहितपुष्पपुरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्तेपूजा समर्पणं विभाव्या ॥

४ जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यस्थित देवीपादार-मूले विलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

III मुलाधारे चतुर्दले अष्टदलदेवीः ॥

जपाकुसुममिश्रवर्ण ॥

78 பக்கம் முதல் 6 சுலோகம்

वेदान्त वेद्यखिलविश्वमूर्ते विभोविरूपाक्षविशेषशून्यम् ॥

विश्वेश्वराशेषतु विशेषबन्धो (मूलाधार) कवाटमुद्घाटय कालकाल ॥

हस्तताडनं कृत्वा ॥

ह कारप्रकृतिक अष्टमूर्त्यात्मक शिवाभिन्ने जपाकुसुममिश्रे अष्टपले श्रीदेव्याः पृष्टदलमारभ्य पूर्वादिक्षु अग्नेयादिविदिक्षु च क्रमेण ॥

४ ह्रीं क्लीं सौः ॥ हं सर्वसंक्षोभण चक्राय अष्टदलचक्राय नमः ॥

| | | | |
|---|---|---|---|
| ४ कं+ङं अनंगकुसुमा देवी श्री+नमः | | ४ पं+मं अनं गरेखा देवी श्री+नमः | |
| ४ चं+ञं अनंगमेखला | ,, | ४ यं+रं अनंगवेगिनी | ,, |
| ४ टं+णं अनम्गमदना | ,, | ४ शं+सं अनम्ङ्गांकुशा | ,, |
| ४ तं+नं अनम्गमदनातुरा | ,, | ४ हं+क्ष अनङ्गमालिनी | ,, |

ध्यानम् ॥

एता ध्यायेत्पुस्तकाक्षमालाहस्तारूणप्रपा
वेणीकृतलसत्केशाध्यातव्यारक्तकं चुका ॥

४ ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रे श्वरी (अनम्गकुसुमाग्रे) श्री+नमः

४ मं महिमाद्धि श्री+नमः ॥

४ क्लीं सर्वाकर्षिणी मुद्राशक्ति श्री+नमः ॥

४ क्लीं सर्वाकर्षिणी मुद्रां पदर्श्य ॥

मूलम् एताः गुप्ततरयोगिन्यः सर्वसंक्षोभणचक्रेसचक्रः सासनाः....+
16

सन्तु इति हृदि श्रीचक्रमध्यस्थितदेवीपादारमूले पूजांसमर्पणम् ॥ इति विभाव्य

४ करुणरसात्मिकां ध्यात्वा ॥

४ मूलम् श्रीललितामहात्रिरसुन्दरी श्री+नमः ॥ त्रिवारम्
16

४ मूलम् समस्तगुप्ततरयोगिनीमयूखा श्री+नमः ॥
16

४ जीवात्माने आवरणानि सहितं पुष्पपूरितहस्ते हृदय श्रीचक्रमध्य-स्थित देवीवामहस्ते पूजा समर्पणं त्रिभाव्य

४ जीवात्मानं अवारणानि सहित हृदय श्रीचक्रमध्यस्थित देवी पादार मूलेविलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

IV स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः ॥ दाडिमीवर्णम्

ध्यानम् ॥

பக்கம் 77-ல் 1 முதல் 5 சுலோகம் முடிய

वेदान्तवेद्यखिलविश्वमूर्तेविभोविरूपाक्षविशेषशून्यं ॥

विश्वेश्वराशेषतु विशेषवन्धो (स्वाधिष्टान) कवाटं मुद्धाटय काल काल ॥

हस्तताडनं कृत्वा ॥

ईकारप्रकृतिक चतुर्दशभुवनात्मक महामायारूपेदाडिमी प्रसूनसहोदरे चतुर्दशारे देव्याग्रकोणमारभ्य वामावृत्तेन ॥

४ हैं ह्स्क्लीं ह्सौः ॥ षं सर्वसौभाग्यदायकचक्रायचतुर्दशार (मन्वश्रा) चक्राय नमः ॥

| | | | |
|---|---|---|---|
| ४ कं सर्वसंक्षोभिणी शक्ति श्री+नमः | | ४ जं सर्वशंकरी शक्ति श्री+नमः | |
| ४ खं सर्वविद्राविणी | ,, | ४ झं सर्वरंजिनी | ,, |
| ४ गं सर्वाकर्षिविणी | ,, | ४ ञं सर्वेन्मादिनी | ,, |
| ४ घं सर्वेह्लादिनी | ,, | ४ टं सर्वार्थसादिनी | ,, |
| ४ ङं सर्वसंमोहिनी | ,, | ४ ठं सर्वसंपात्तिपूरणी | ,, |
| ४ चं सर्वस्तंभिनी | ,, | ४ डं सर्वमन्त्रमयी | ,, |
| ४ छं सर्वजृंभिनी | ,, | ४ ढं सर्वद्वन्द्वक्षयंकरी | ,, |

ध्यानम् ॥

एता ध्योयेदिक्षुचापधराहस्ताविद्रुमप्रभा ॥
रक्तांगीरक्तनसना सर्वाभरणभूषिताः ॥

७ हैं ह्क्लीं ह्सौः त्रिपुरवासिनी चक्रेश्वरी (सर्वसंक्षोभिण्यग्रे) श्री+नमः ॥

७ ईं ईशित्वसिद्धि श्री+नमः ॥

७ ब्लूं सर्ववशङ्करी मुद्राशक्ति श्री+नमः ॥

७ ब्लूं सर्ववशङ्करी मुद्रां प्रदर्श्य ॥

७ मूलम् एताः संप्रद्राययोगिन्यः सर्वसौभाग्यदायकचक्रे सचक्राः
16
सासनाः.... + सन्तुइति हृदय श्रीचक्रमध्यस्थितदेवीपादारामूले पूजासमर्पणम् विभाय ॥

७ भयानकर रसात्मिकां ध्यात्वा ॥

७ मूलम् श्रीललितामहात्रिपुरसुन्दरी श्री+नमः ॥ त्रिवारम्
16

७ मूलम् समस्तसंप्रदाययोगिनीमयूखा श्री+नमः ॥
16

७ जीवात्मानं आवरणानि सहित पुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्ते पूजा समर्पणम् ॥ विभाव्य

७ जीवात्मानं आवरणानि सहित हृदयमध्यस्थित देवीपादारमूले विलीनानिविभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

V मणिपूरके दशदले बहिर्दशारदेवीः ॥

सिन्दूरवर्णय् ॥

ध्यानम् ॥ பக்கம் 75 1 முதல் 5 சுலோகம்

वेदान्त वेद्याखिल विश्वमुर्तेविभो विरूपाक्ष विरोषसून्यम् ।

विश्वेश्वरा शेषतुविशेषबन्दो (मणिपुरक) कवाटमुद्गाटयकालकाल ॥

हस्तताटनं कृत्वा ॥

ऍं । एकारप्रकृतिक दशावतारात्मकविष्णुस्वरूपे प्रभापराभूतसिन्दूरे बहिर्दशारे देव्याग्रकोणमारभ्यप्रदक्षिण्येन ॥

४ हूसैं हूस्क्लीं हूस्सौः ॥ ऍं सर्वार्थसाधकचक्राय बहिर्दशारचक्राय नमः ॥

| | |
|---|---|
| ४ तं सर्वसिद्धिपदा देवी श्री+नमः | ४ पं सर्वदुःखवीमोचिनी देवी श्री+नम |
| ४ थं सर्वसंपत्प्रदा ,, | ४ फं सर्वमृत्युप्रशमनी ,, |
| ४ दं सर्वप्रियंकरी ,, | ४ बं सर्वविघ्ननिवारणी ,, |
| ४ धं सर्वमंगलकारिणी ,, | ४ भं सर्वांग सुन्दरी ,, |
| ४ नं सर्वकामपदा ,, | ४ मं सर्वसौभाग्यदामिनी ,, |

ध्यानम् ॥

एताः वराभयकरामुक्ताहारविभूषणाः ।
त्रिलोचनाश्चन्द्रकलामौलीद्ध्यायेदभीष्टदाः ॥

४ ह्सौ ह्स्क्लीं ह्स्सौः त्रिपुराचक्रेश्वरी (सर्वसिद्धिप्रदाग्रे) श्री+नमः ॥

४ वं वशित्वसिद्धि श्री+नमः ॥

४ स सर्वोन्मादिनी मुद्राशक्ति श्री+नमः ॥

४ सः सर्वोन्मादिनीमुद्रां प्रदर्श्य ॥

७ मूलम् एताः कुलोत्तीर्णयोगिन्यः सर्वार्थ साधकचक्रे सचक्राः सासनाः
16

....+ सन्तु इति श्रीचक्रमध्यस्थित देवीपदारमूले पूजासमर्पणं विभाव्य ॥

४ भीमरसात्मिकां ध्यात्वा ॥

७ मूलम् श्रीललिता महात्रिपुरसुन्दरी श्री+नमः ॥ त्रिवार
16

७ मूलम् कुलकौलयोमिनीमयूखा श्री+नमः ॥
16

४ जीवात्मनं आवारणनि सहित पुष्पपूरितहस्ते हृदय श्रीचक्र मध्य-स्थित देवीवामहस्तेपूजा समर्पणं विभाव्य ॥

४ जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यस्थित देवीपादार-मूले वीलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

VI अनाहतेद्वादशदले अन्तर्दशारदेवीः ॥

जपासुमनः ॥

ध्यानम् ॥ *பக்கம் 74-ல் 1 முதல் 5 சுலோகம் முடிய*

वेदान्त वेद्ध्याखिल विश्वमूर्ते विभोविरूपाक्षविशेषसून्यम् ॥

विश्वेश्वबरा शेषतुविशेषबःदो (अनाहत) कवाटमूद्धटय कलाकला ॥

रेफप्रकृतिकदशकलात्मक वैश्वनराभिन्नैजपासुमनः सहचरे अन्तर्दशारे देव्याग्रकोणमारभ्य वामावृत्तेन ॥

४ ओं ह्रीं क्लीं ब्लों ॥ रं सर्वरक्षाकरचक्राय अन्तर्दशरचक्रायनमः ॥

४ मं सर्वज्ञा देवी श्री+नमः
४ यं सर्वशक्ति ,,
४ रं सर्वैश्वर्यप्रदा ,,
४ लं सर्वज्ञानमयी ,,
४ वं सर्वव्यादिविनाशिनी ,,
४ शं सर्वाधारस्वरूपा देवीश्री+नमः
४ षं सर्वपापहारा ,,
४ सं सर्वानन्दमयी ,,
४ हं सर्वरक्षास्वपिणी ,,
४ क्षं सर्वेप्सितफलप्रदा ,,

ध्यानम् ॥

एताः अन्तर्दशारस्थाध्यायेद्देवीरभीष्टदाः ।
अक्षस्रक्पुस्तकधराः कर्पूराकृतिकान्तयः ॥

४ ह्रीं क्लीं ब्लें ॥ त्रिपुरमालिनीचक्रेश्वरी (सर्वज्ञाग्रे) श्री+नमः ॥

४ पं प्राकांयसिद्धि श्री+नमः

४ क्रों सर्वमहांकुशामुद्राशक्ति श्री+नमः ॥

४ क्रों सर्वमहांकुशामुद्रां प्रदर्श्य ।

७ मूलम् एताः निगर्भयोणिन्यः सर्वरक्षाकरचक्रे सचक्राः सासनाः....+
16
सन्तुइति हृति श्रीचक्रमध्यस्थित देवी पदारमूले समर्पणम् ॥ विभाव्य

४ रौद्ररसात्मिकांध्यात्वाः ॥

७ मूलम् श्रीललिता महात्रिपुरसुन्दरी श्री+नमः ॥ त्रिवारम्
16

७ मूलम् निगर्भयोगिनीमयूखा श्री+नमः ॥
16

४ जीवात्मानं आवरणानि सहितपुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवी वामहस्तेपूजा समर्पणम विभाव्य ॥

जीवात्मानं आवरणानिसहित हृदयश्रीचक्रमध्यत्र्यस्थित देवी पादार मूलेविलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

VII विशद्धौषोडशदले अष्टारदेवी पद्मरागवरणम् ॥

ध्यानम् ॥ பக்கம் 73-ல் 1 முதல் 5 சுலோகம் முடிய

वेदान्तवेध्याखिलविश्व मूर्त्तेविभो विरूपाक्षविशेषसून्यम ॥

विश्वेश्वराशेषतुविशेवःधो (विशुद्धिचक्र) कवाटमुद्राटयकालकाल। हस्त-ताडनं कृत्वा ॥

४ कं ककारप्रकृतिक अष्टमूवत्यीत्मक कामेश्वरस्वरूपे पद्मरागरूचिरे अष्टारेदेव्याग्रकोणाय प्रादक्षिण्येन ॥

४ ह्रीं श्रीं सौः ॥ कं सर्वरोगहरचक्रायनमः ॥

अष्टारचक्राय नमः ॥

४ अं+अः व्लूं वशिनी वाग्देवता श्री+नमः ॥

४ कं+ङं कल्हीं कामेश्वरी ,,

४ चं+ञं न्व्लीं मोदिनी ,,

४ टं+णं य्लूं विमला ,,

४ तं+नं ज्म्रीं अरुणा ,,

४ पं+मं ह्स्ल्व्यूं जयिनी ,,

४ यं+वं झ्म्र्यूं सर्वेश्वरी ,,

४ शं+क्षं क्ष्म्रीं कौलिनी ,,

ध्यानम् ॥

एताः वाग्देवताध्यायेद्दडिमीकुसुमप्रभा ।
शरश्चापौपुस्तकाक्षमालेहस्तेश्चबिभ्रति ॥

४ ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रश्वरी (वशिनीवाग्देवत्ताग्रे) श्री+नमः

४ मुं मुक्ति सिद्धि श्री+नमः ॥

४ ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्ति श्री+नमः ॥

४ ह्स्ख्फ्रें सर्वखेचरीमुद्रां प्रदर्श्य ॥

७ मूलम् 16 एता रहस्ययोगिन्यः सर्वरोगहरचक्रे सचक्राः सासनाः......+
सन्तुइति हृदय श्रीचक्र मध्यत्र्यस्थितदेवी पादारमूले पूजा समर्पणं विभाव्य ॥

४ हास्यरसात्मिकां ध्यात्वा ॥

४ श्रीललितामहात्रिपुरसुन्दरी श्री+नमः

४ रहस्ययोगिनीमयूखा श्री+नमः ॥

४ जीवात्मानं आवरणानिसहितहृदय श्रीचक्रमध्यत्र्यस्थितदेवी वाम-
हस्ते पूजा समर्पणं विभाव्य ॥

४ जीवात्मानं आवरणानिसहितहृदय श्रीचक्रमध्यत्र्यस्थितदेवीपादार-
मूलेविलीनानि विभाव्य ॥

योनिमुद्रां प्रणमेत् ॥

VIII लंबिकाग्रे आयुधदेवीः ॥

४ ओं आं ह्रीं क्रीं यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः सर्व जंभ-
नेभ्येकामेश्वरीकामेश्वरबाणेभ्यो नमः बाणशक्ति श्री+नमः ॥

४ थं धं सर्वसंमोहनाभ्यां कामेश्वरी कामेश्वर धनुभ्यां नमः। धनुः
शक्ति श्री+नमः ॥

४ आं ह्रीं ह्रीं सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वर पाशाभ्यां नमः
पाशशक्ति श्री+नमः ॥

४ क्रों क्रों सर्वस्तंभनाभ्यां कामेश्वरीकामेश्वर अङ्कुशाभ्यां नमः अङ्कुश-
शक्ति श्री+नमः ॥

एताः ध्यायेत्पुस्तकाक्षमाला आयुधदेवताः ॥

त्रिकोणदेवी ॥

बन्धूकपुष्पबन्धु किरणम् ॥

नादप्रकृतिक गुणत्रय प्रधान त्रिशक्तिरूपरेखात्रयात्मके बन्धूकपुष्पबन्धु
किरणेत्रिकोणे अग्र-दक्षवामकोणेषु बिन्दौचक्रमेण ॥

४ ह्सैं ह्सक्लीं ह्सौः (नादं) सर्वसिद्धिप्रदचक्राय त्रिकोणचक्राय नमः

४ ऐं प्र ॥ अग्निचक्रे कामगिरिपीठे मित्रेशनाथनवयोनी चक्रात्मक आत्मतत्व सृष्टिकृत्यजाग्रद्दशाधिष्ठायक इच्छाशक्ति वाग्भवात्मक वागीश्वरी स्वरूपब्रह्मात्मशक्ति महाकामेश्वरी श्री+नमः ॥

ध्यानम् ॥

पाशांकुशामृतकपालवराभयांके
हस्तैश्चषड्भिरभिरामतमारुणाङ्गी ।
कोणग्रहाति नयनातरुणेन्दु चूडा
कामेश्वरी ममतातु समस्तकामात् ॥

४ क्लीं द्वि ॥ सूर्यचक्रे जालन्ध्रपीठे षष्ठीशनाथदशारद्वय चतुर्दशार चक्रात्मक विध्यातत्वस्थितिकृत्य स्वप्नदशाधिष्ठायक ज्ञानशक्ति कामराजात्मक कामकलास्वरूप विष्ण्वात्माशक्ति महावज्रेश्वरी श्री+नमः ॥

ध्यानम् ॥

बालप्रवालरुचिराकरषडङ्ग सङ्गी
चापेन्दुपाश गृणिपुस्तक मातुलङ्गा ।
वज्रेश्वरी प्रथितदक्षकोणसंस्था
वज्रोज्वलाविदिशतां ममवांचितानि ॥

४ सौः त्रि । सोमचक्रेपूर्णगिरिपीठे गह्वरेउड्डीशनाथ अष्टदलषोडशदल चतुरश्रचक्रात्मकशिवतत्व संहारकृत्य सुषुप्तिदशाधिष्ठायकक्रियाशक्ति शक्तिबी-जात्मकपरापरशक्ति स्वरूपरुद्रात्मशक्ति महाभगमालिनी श्री+नमः ॥

ध्यानम् ॥

प्रत्यर्कशशाङ्करुचिराशितवामकोणा
पाशङ्कुशाक्षगुणपुस्तकशास्त्रहस्ता ।
उद्भासयत्यनिशमद्भुतभूरिशक्तिः भाग्यं श्रियं भगवति भगमालिनीमे ॥

४ ह्सैं ह्स्क्लीं ह्स्रौ एं प्र क्लीं द्वि सौः त्रि ॥

परब्रह्मचक्रे महोड्याणपीठे श्रीचर्यानन्दनाथसमस्तचक्रात्मक सपरिवार परमतत्व सृष्टिस्थिति संहारकृत्य तुरीयदशधिष्ठायक इच्छा-ज्ञान-क्रिया शान्ता-

शक्ति कामराजशक्ति बीजात्मक परापरमशक्तिस्वरूप परब्रह्मात्मशक्ति श्रीमहात्रिपुरसुन्दरी श्री+नमः ॥

४ ईं इच्छा शक्ति श्री+नमः ॥

४ ह्सौः सर्वबीजामुद्राशक्ति श्री+नमः ॥

४ ह्सौः सर्वबीजामुद्रां प्रदर्श्य ॥

७ मूलम् एताः रहस्ययोगिन्यः सर्वसिद्धि प्रदचक्रे सचक्राः सासना....+
16

सन्तु इति हृति श्रीचक्रमध्यस्थितदेवी पादारमूले पूजा समर्पणम् । विभाव्य ॥

४ अद्भुत रसात्मिकां ध्यात्वा ॥ त्रिवारम्

७ मूलम् श्रीललितामहात्रिपुरसुन्दरी श्री+नमः ॥
16

७ मूलम् अतिरहस्ययोगिनीमयूखा श्री+नमः ॥
16

४ जीवात्मानं आवरणानिसहितपुष्पपूरितहस्ते हृदयश्रीचक्रमध्यस्थित देवीवामहस्तेपूजा समर्पणं विभाव्य ॥

४ जीवात्मानं आवरणानिसहितहृदय श्रीचक्रमध्यत्र्यस्थित देवीपादारमूले विलीनानि विभाव्य ॥

योनिमूद्रां प्रणमेत् ॥

IX आज्ञायां द्विदलं ॥ नादं

ध्यानम् ॥ *பக்கம் 79-ல் 1 முதல் 6 சுலோகங்கள்*

वेदान्त वेद्याखिल विश्वमूर्ते विभोविरूपाक्षविशेष सून्या ॥

विश्वेश्वराशेषतुविशेषबन्धो (अद्या) कवाटय मुद्घाटयकालकला ॥

हस्तताडनं कृत्वा ॥

४ हंसवत्यै नमः ॥ ४ क्षमावत्यै नमः ॥

४ जीवात्मानं आवरणानिसहित पुष्पपूरितहस्ते हृदयमध्यत्रयस्थितदेवी वामहस्ते पूजा समर्पणं विभाव्य ॥

४ जीवात्मनं आवरणानिसहित हृदय मध्यत्रयस्थितदेवी पादारमूले विलीनानि विभाव्य ॥

योनिमूद्रां प्राणमेत् ॥




X बिन्दुगतदेवी ॥

सहस्रार चक्रम् ॥

श्री राजराजेश्वरी ॥

श्री ललितामहात्रिपुरसुन्दरी ॥

बिन्दु भिन्न परब्रह्मात्म बिन्दु चक्रे ॥

गुरुध्यानम् ॥ பக்கம் 20

षोडशीध्यानम् ॥ பக்கம் 46&47 1 முதல் 7 சுலோகங்கள்

गुरुत्रयं स्वशिरसि ॥ பக்கம் 27-ல் 24 (1. 2. 3.)

७ मूलम् सर्वानन्दमय चक्राय नमः ॥
16

७ मूलम् सपरिवारपरमतत्व सृष्टिस्थितिसंहारकृत्य इच्छा ज्ञानक्रियाशा-
16
न्ता शक्ति वाग्भव कामराजशक्ति बीजात्मक तुरीयातीतदशाधिष्ठायक परा-
परमशक्ति स्वरूपश्रीमहात्रिपुरसुन्दरी परब्रह्मात्मशक्ति श्री+नमः ॥

ध्यानम् ॥ பக்கம் 80&81-ல் 1 முதல் 5 சுலோகங்கள்

७ मूलम् हसकलरडैं हसकलरडीं हसकलरडौः श्रीललितामहात्रिपुरसुन्दरी
16
चक्रेश्वरी श्रीगुरुपादुकाबिन्दौ संचिन्त्य पूजयामि नमः ॥

श्रीललितामहात्रिपुरसुन्दरी

ध्यानम् ॥

कल्पकोद्यानमृतुभिः षड्भिः सेवितविग्रहम् ।
तन्मध्येऽसंख्यरूपभिर्वृतां सङ्गीतशक्तिभिः ॥ १ ॥
गीतवादित्रनृत्यादिसंसक्ताभिरनारतम् ।
विनोद्यमानां विलसन्मदमन्थरवीक्षणाम् ॥ २ ॥
रत्नमण्डपमध्यस्थरत्नसिंहासनोपरि ।
शुचिस्मितां शक्तिवृन्दगीताकर्षणनन्दिताम् ॥ ३ ॥
सहजासवसम्भोगैः सञ्जातानन्दविग्रहाम् ।
दयामदारुणापाङ्गविलोकितसुसाधकाम् ॥ ४ ॥
परितो भूषणैश्चित्रैः स्वर्णचामरकादिभिः ।
विराजमानान्द्विरदानश्वानपि तथाविधान् ॥ ५ ॥
शक्तिभिर्दर्शितानग्रे पश्यन्तीमभितोत्सवाम् ।
स्वसमानाभिरभितो नित्याभिःसेवितान्तथा ॥ ६ ॥

याति तासां पूजयिता तत्समाकारतां शनैः ।
तद्भिनोदस्तत्समीपनीवासी स्यात् सुनिश्चितम् ॥ ७ ॥

ललितानामानि ।

४ सिंहासनेश्यै नमः
४ ललितायै ,,
४ महाराज्ञ्यै ,,
४ वराङ्कुशायै ,,
४ चापिन्यै ,,
४ त्रिपुरायै ,,
४ महात्रिपुरसुन्दर्यै ,,
४ सुन्दरीचक्रनाथायै ,,
४ सम्राज्ञ्यै ,,
४ चक्रिण्यै ,,
४ चक्रेश्वर्यै ,,
४ महादेव्यै ,,
४ कामेश्यै नमः
४ परमेश्वर्यै ,,
४ कामराजप्रियायै ,,
४ कामकोटिकायै ,,
४ चक्रवर्तिन्यै ,,
४ महाविद्यायै ,,
४ शिवायै ,,
४ अनङ्गवल्लभायै ,,
४ सर्वपाटलायै ,,
४ कुलनाथायै ,,
४ आम्नायनाथायै ,,
४ सर्वाम्नायनिवासिन्यै ,,
४ श्रृङ्गारनायिकायै नमः

४ प्रं प्राप्तिसिद्धि श्री+नमः ॥
४ ऐं सर्वयोनिमुद्रां शक्ति श्री+नमः ॥
४ ऐं सर्वयोनिमुद्रां प्रदर्श्य ॥

७ मूलम् एता परापररहस्ययोगिनी सर्वानन्दमयबैन्दवचक्रे महोड्याण-

पीठे श्रीचर्यानाथात्मकतुरीयतुरीयातीत दशादिष्टायक शान्तिकलात्मक प्रकाशविमर्शसामरस्यात्मकपरब्रह्मस्वरूपिणीपरामृतशक्तिः सर्वमन्त्रेश्वरी सर्वयन्त्रेश्वरी सर्वचीरेश्वरी सर्वपीठेश्वरी सर्वविश्वेश्वरी सर्ववीरेश्वरी सर्वयोगेश्वरी सर्वसिद्धेश्वरी सर्वतत्वेश्वरी सकलजगत्युत्पत्तिस्थिति संहारमातृका सचक्रा सासना .... सन्तु- इति हृदिमध्यन्यस्यानग्रे श्रीललिता महात्रिपुरसुन्दरी पादारविन्दुमूलेपूजयामि नमः इतिविभाव्य ॥

४ शान्तिरसात्मिकां ध्यात्वा ॥

४ श्रीं ह्रीं क्लीं ऐं सौ ओं ह्रीं श्रीं कएईल ह्रीं हसकहल ह्रीं सकलह्रीं सौः क्लीं ह्रीं श्रीं महाषोडशी श्री+नमः ॥

७ मूलम् श्रीललितामहात्रिपुरसुन्दर्यै नमः । त्रिवारम् ॥
16

जगन्मातर्महादेवि महात्रिपुरसुन्दरी ।
सुधाचैतन्यमूर्तिं ते कल्पयामि नमश्शिवे ॥
महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरी ॥
एह्येहि देवदेवेशि त्रिपुरे देवपूजिते ।
परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ॥

इति मन्त्रेण बिन्दुपीठगतनिर्विशेषब्रह्मात्मक श्रीकामेश्वराङ्के परदेवतामावाहयेत् ॥

ओं समस्तप्रकट गुप्त गुप्ततर सम्प्रदायक कुल कौळगर्भ निगर्भ रहस्य अतिरहस्य परापररहस्य योगिनीप्रमुख सर्वशक्तिमण्डल मण्डितत्रैलोक्यमोहन सर्वाशापरिपूरकसर्वसंक्षोभण सर्वसौभाग्यदायक सर्वार्थसाधक सर्वरक्षाकर सर्वरोगहर सर्वसिद्धिप्रद सर्वानन्दमयाख्य नवचक्राधीश्वरी त्रिपुरा त्रिपुरेशी त्रिपुरसुन्दरी त्रिपुरवासिनी त्रिपुराश्री त्रिपुरमालिनी त्रिपुरासिद्धी त्रिपुराम्बा त्रिपुरभैरवी श्रीमहा त्रिपुरसुन्दरी देवताञ्जलिललिता कबलित निरशेषतत्वग्रासस्वरूपिणी श्रीललिताभट्टारिकाख्य मयूखमालिनी सच्चिदानन्दात्म प्रत्यगात्मस्वरूपिणी इच्छाज्ञानक्रिया स्वतन्त्रिणी श्रीगुरुमूर्तिस्वरूपिणी श्रीचक्रदेवताभ्यो नमः ॥

अथ नित्याऽऽदिकमणिमाऽन्तं श्रीकामेश्वराङ्कोपवेशनं विना श्रीदेवी समानाकृतिवेषभूषणायुधशक्तिचक्रं ओघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य मूलेन आवाहनसंस्थापनसन्निधापनसन्निरोधन सम्मुखीकरणावगुण्ठन वन्दनधेनुयोनिमुद्राः प्रदर्शयन् तदखिलं भावयेत् ॥

अत्र—

मेरुमन्त्रात्मकं चक्रं श्रीत्रिपस्तत्र देवताः ।
कामेश्वरः प्रकाशात्मा श्रीविमर्शस्तदङ्कगः ॥
इत्येतद्भ्वासनारूपं अभेदं च परस्परम् ।
ज्ञात्वा श्रीगुरुवक्त्राब्जात् कृता पूजा महाफला ॥

मेरुमन्त्रश्च चतुरश्रादि चक्रनवकविशेषणगतैः लकारादिभिः अवयवैः ज्ञातव्यः ॥

४ त्रिपुरे त्रिपुरेशी त्रिपुरसुन्दरी त्रिपुरवासिनी त्रिपुराश्री त्रिपुरमालिनी त्रिपुरासिद्धे त्रिपुरांबा महात्रिपुरसुन्दरी महामहाराज्ञी महामहाशक्ति महामहा-गुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्कन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रसांराज्ञी नमस्ते नमन्ते नमस्ते स्वहा श्रीचक्रसांराज्ञी श्री+नमः

४ सं सर्वकामसिद्धि श्री+नमः ॥
४ ह्सैं ह्स्क्लीं ह्सौः सर्वत्रिखण्डामुद्राशक्ति श्री+नमः ॥
४ ऐं .... .... .... .... .... .... मुद्रां पदर्श्य ॥

७ मूलम् श्रीललितामहात्रिपुरसुन्दरी श्री+नमः त्रिवारम् ॥
16

७ मूलम् एताः परापररहस्ययोगिनीमयूखा श्री+नमः ॥
16

सर्वावयसुन्दरीः पञ्चदेवताः देव्याग्रे संस्पृश्येताभिः चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मरं स्मरं पञ्चेपचारमुद्राश्च पदर्शिताभाव्येत् ॥

पीत नासायां सुगन्धपत्पदार्थानुभावेन प्रत्यङ्मुखतया
प्रमातरिविश्रान्तिः गन्धंसमर्पणम् ॥

सित श्रोत्र सुशब्दवत्पदार्थानुभावेन प्रत्मङ्मुखतया
प्रमातरि विश्रान्तिः पुष्पं समर्पणम् ॥

श्याम नाभौ सुस्पर्शवत्मदार्थानुभावेनप्रत्मङ्मुखतया
प्रमातरि विश्रान्तिः धूपं समर्पणम् ॥

रक्त नयने सुरूपवत्पदार्थानुभावेन प्रत्यङ्मुखतया
प्रमातरि विश्रान्तिः दीपं समर्पणम् ॥

शुक्ल जिह्वायां स्वादुरसवत्पदार्थानुभवेन प्रत्यङ्मुखतया
प्रमातरिविश्रान्तिः नैवेद्यम् ॥ इति विभाव्य

जीवात्मानं पञ्चदेवताभिः सहितदेवीपादारमूले विलीनानि विभाव्य ॥
मूलविध्यां जपेत् । क्षणं न किंचिदपि चिन्तयेत् ॥

अथ देव्या प्रेरितमानसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकस्वात्माभिन्नां परचिति सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमगर्भितेऽञ्जलौ समानीय—

४ ह्रीं श्रीं सौः श्रीललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः ॥
हृन्मध्यरूपनिरुपाधिकसंविन्मात्ररूप कामेश्वराङ्कनिलयायै
सच्चिदानन्दैकब्रह्मात्मने परदेवतायै ललितायै महात्रिपुरसुन्दर्यै नमः ।
निरुपाधिकचैतन्यमेव सच्चिदानन्दधर्मकमन्तः करणाप्रतिबिम्बितम्

सदाऽहमेवेत्यनुसन्धानं ललिताया लौहित्यमिति विभाव्य अभेदसम्बन्धेन चित्त्वादिधर्मविशिष्टसंविदश्च तादात्म्यसम्बन्धरूपं कामाङ्कयन्त्वणं विशेषणं विभाव्य उपाध्यभावरूपशुक्लत्वेनोपलक्षिता सतीशुद्धसंविदेव शुक्लचरणः । चित्तविशिष्टसंवित्प्राथमिकपराहन्तात्मकवृत्तिरूपेण रागेणोपलक्षिता सती रक्तचरणः । अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो विशेषणविशेष्यभावरूपैव तदुभयसामरस्यमिति विभाव्य ।

हृद्रूपसर्वानन्दमयचक्रेश्वर्यै महात्रिपुरसुन्दर्यै नमः ।
परापररहस्ययोगिनीरूपस्वात्मात्मने प्राप्तिसिद्ध्यै नमः ।
अपरिच्छिन्नरूपस्वात्मात्मने योनिमुद्रायै नमः ।

इति तत्तत्स्थूानस्पर्शपूर्वकं सम्यगनुसन्धायोपचारान् समर्पयेत् ।

तद्यथा—एवमपरिच्छिन्नतया भाविताया ललितायाः स्वे महिम्न्येव प्रतिष्ठितमासनम् अनुसन्दधामि । इति आसनम् ॥

वियदादिस्थूलप्रपञ्चरूपपादगतस्य नामरूपात्मकमलस्य सच्चिदानन्दैकरूपत्वभावनाजलेन क्षालनं पाद्यं भावयामि । इति पाद्यम् ॥

सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि । इतिअर्घ्यम् ॥

भावनारूपाणामपामपि कबलीकाररूपमाचमनं विभावयामि । इति आचमनीयम् ॥

सत्त्वचित्त्वानन्दत्वाद्यखिलावयवाच्छेदेन भावनाजलसम्पर्करूपं स्नानमनुचिन्तयामि । इति स्नानम् ॥

तेष्वेवावयवेषु प्रसक्ताया भावनात्मकवृत्तिविशेष्यतायाः प्रोञ्छनं वृत्तिविषयत्वभावनेन वस्त्रं कल्पयामि । इति वस्त्रम् ॥

निर्विषत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेकधर्म्मरूपाण्याभरणानिधर्म्यभेदभावनेन समर्पयामि । इति आभरणम् ॥

स्वशरीघटकपार्थिवभागानां जडतापनयेन चिन्मात्रतावशेषरूपं गन्धं प्रयच्छामि । इति गन्धम् ॥

आकाशभागानां तथा भावनेन पुष्पाणि ददामि । इति पुष्पाणि ॥

वायव्यभागानां तथा भावनया धूपयामि । इति धूपम् ॥

तैजसभागानां तथाकरणेनोद्दीपयामि । इति दीपम् ॥

अमृतभागांस्तथा विभाव्य निवेदयामि । इति निवेद्यम् ॥

षोडशान्तेन्दुमण्डलस्य तथा भावनेन ताम्बूलकल्पमाचरामि । इति ताम्बूलम् ॥

परापश्यन्त्यादि निखिल शब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तुवीमि । इति स्तोत्रम् ॥

विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणि विलापनेन प्रदक्षिणीकरोमि । इति प्रदक्षिणम् ॥

तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि । इति नमस्कारः ॥

विहिताविहितविषया वृत्तय उत्पन्ना अहं त्वं गुरुर्देवतेत्यादयस्ताः सर्व्वाश्चक्रायस्थानन्तशक्तिकदम्बरूपास्तत्तत्सूक्ष्मरूपा ये ये संस्काराश्च तत्सर्वं चिन्मात्रमेवेति विभावनया निर्व्युत्थानं स्वात्मनि जुहोमि । इति उपचर्य्य जुहुयात् । इति होमम् ॥

प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ता विषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्त इति भावनया तर्पयामि । इति तर्पणम् ॥

तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्व्वमस्ति भाति प्रियश्च न तु नामरूपवत् अतः सर्वं ब्रह्मैवेति विभावयामि । इति ब्रह्मविभावनम् ॥

अथवा

पूर्व्वलिखितां नित्याभावनामिहैव श्वासविलापनफलिकां कुर्य्यात् ॥

प्रणव चिन्तनम् ॥ तेन मनः पवनात्मनामैक्यनिफालनेन त्रीन् मुहूर्त्तान् द्वावेकं मुहूर्तमवच्छिन्नं यापयेत् ।

॥ श्रीमन्त्रमातृकापुष्पमालास्तवः ॥

कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्मणि-
द्वीपे कल्पकवाटिकापरिवृते कादम्बवाट्युज्वले ।
रत्नस्तंभसहस्रनिर्मितसभामध्ये विमानोत्तमे
चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ॥

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्यस्थितां
बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रताम् ।
चापं बाणमपि प्रसन्नवदनां कौसुंभवस्त्रान्वितां
तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये ॥

ईशानादिपदं शिवैकफलकं रत्नासनं ते शुभं
पाद्यं कुङ्कुमचन्दनानिभरितैरर्घ्यं सरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं
कारुण्यामृतवारिधे तदखिलं सन्तुष्टये कल्प्यताम् ॥

लक्ष्ये योगिजनस्य रक्षितजगज्जाले विशालेक्षणे
प्रालेयाम्बु पटीरकुङ्कुमलसत्कर्पूरमिश्रोदकैः ।
गोक्षीरैरपि नारिकेलसलिलैः शुद्धोदकैर्मन्त्रितैः
स्नानं देवि धिया मयैतदखिलं सन्तुष्टये कल्प्यताम् ॥

ह्रीङ्काराङ्कितमन्त्रलक्षिततनो हेमाचलात्संचितैः
रत्नैरुज्वलमुत्तरीयसहितं कौसुंभवर्णांशुकम् ।
मुक्तासन्तति यज्ञसूत्रममलं सौवर्णतन्तूद्भवं
दत्तं देवि धिया मयैतदखिलं सन्तुष्टये कल्प्यताम् ॥

हंसैरप्यतिलोभनीयगमने हारावलीमुज्वलां
हिन्दोलद्युतिहीर पूजिततरे हेमाङ्गदे कङ्कणे ।
मञ्जीरौ मणिकुण्डले मकुटमप्यर्धेन्दुचूडामणिं
नासामौक्तिकमङ्गुलीयकटकौ काञ्चीमपि स्वीकुरु ॥

सर्वाङ्गेघनसार कुङ्कुमघन श्रीगन्ध पङ्काङ्कितं
कस्तूरीतिलकं च फालफलके गोरोचनापत्रकम् ।
गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं तेऽञ्चितं
कण्ठाब्जे मृगनाभिपङ्कममलं तत्प्रीतते कल्प्यताम् ॥

कल्हारोत्पलमल्लिका मरुवकैः सौवर्णपङ्केरुहै-
र्जातीचम्पकमालतीवकुलकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः कॢप्ताः स्रजो मालिकाः
सङ्कल्पेन समर्पयामि वरदे सन्तुष्टये गृह्यताम् ॥

हन्तारं मदनस्य नन्दयसि यैरङ्गैरनङ्गोज्वलैः
यैर्भृङ्गावलिनीलकुन्तलभरैर्बध्नासि तस्याशयम् ।
तानीमानि तवाम्ब कोमलतराण्यामोदलीलागृहा-
ण्यामोदाय दशाङ्गगुग्गुलुघृतैः धूपैरहं धूपये ॥

लक्ष्मीमुज्वलयामि रत्ननिवहोद्भास्वान्तरे मन्दिरे
मालारूपविलम्बितैर्मणिमयस्तंभेषु संभावितैः ।
चित्रैर्हाटकपुत्रिकाकरधृतैर्गव्यैर्घृतैर्वर्धितैः
दिव्यैर्दीपगणैर्धिया गिरिसुते सन्तुष्टये कल्प्यताम् ॥

ह्रीङ्कारेश्वरी तप्तहाटककृतैः स्थालीसहस्रैर्भृतं
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नदं तथा ।
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रे स्थितं
माषापूपसहस्रमंब सफलं नैवेद्यमावेदये ॥

सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः
पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरखण्डोज्वलैः ।
मुक्ताचूर्णविराजितैर्बहुविधैर्वक्त्रांबुजामोदितैः
पूर्णा रत्नकलाचिका तव मुदे न्यस्तापुरस्तादुमे ॥

कन्याभिः कमनीयकान्तिभिरलङ्कारामलारातिका
पात्रे मौक्तिकचित्रपङ्क्तिविलसत्कर्पूरदीपालिभिः ।
तत्तत्तालमृदङ्गगीतसहितं नृत्यत्पदाम्भोरुहं
मन्त्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम् ॥

लक्ष्मीर्मौक्तिकलक्षकल्पितसितच्छत्रं तु धत्ते रसा
पीन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती ।
वीणामेणविलोचनाः सुमनसां नृत्यन्ति तद्रागव-
द्भावैराङ्गिकसात्विकैः स्फुटरसं मातस्तदाकर्ण्यताम् ॥

ह्रीङ्कारत्रयसम्पुटेन मनुनोपास्ये त्रयीमौलिभि-
र्वाक्यैर्लक्ष्यतनो तव स्तुतिविधौ कोवा क्षमेताम्बिके ।
सल्लापास्स्तुतयः प्रदक्षिणशतं सञ्चारएवास्तु ते
संवेशो नमसः सहस्रमखिलं त्वत्प्रीतये कल्प्यताम् ॥

श्रीमन्त्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा
सन्ध्यासु प्रतियासरं सुनियतस्तस्यामलं स्यान्मनः ।
चित्ताम्भोरुहमण्डपे गिरिसुता नृत्तं विधत्ते रसा-
द्वाणीवक्त्रसरोरुहे जलधिजा गेहे जगन्मङ्गला ॥

इति गिरिवरपुत्रीपादराजीवभूषा
भुवनममलयन्ती सूक्तिसौरभ्यसारैः ।
शिवपदमकरन्दस्यन्दिनीयं निबद्धा
मदयतु कविभृङ्गान्मातृकापुष्पमाला ॥

## षोडशी उपनिषत् ॥

ओंपरमकारणभूताशक्तिः केनन्वचक्ररूपोदेहः नवचक्रशक्ति मयंश्रीचक्रं ङ्वाराहीपितृरूपा कुरुकुल्लाचीलदेवता मातापुरुषार्थाः सागराः देहोनवरत्नद्वीपः आधारनवकमुद्राः शक्तयःत्वगादिसप्तधातुभि रनेकैःसँय्युक्ताः सङ्कल्पाः कल्पतरवः तेजःकल्पकोद्यानं रसनयाभा समानामधुराम्लतिक्तकटुकषायालवणरसाः षड्रसाःक्रिया शक्तिपीठङ्कुण्डलिनीज्ञानशक्तिः अहमइच्छाशक्तिर्म्महात्रिपुरसुन्दरीज्ञाताहोता ज्ञानमर्घ्यंज्ञेयंहविः ज्ञातृज्ञानज्ञेयानमोभेदभावनं श्रीचक्रपूजनन्नियतिसहितश्रृङ्गारादयोनवरसा अणिमादयः कामक्रोधलोभमोहमदमात्सर्य्यपुण्य-पापमयाब्रह्मयाद्यष्टशक्तयः आधारं नवकमुद्रशक्तयः पृथ्व्यप्तेजोवाय्वाकाशश्रोत्र-त्वक्चक्षुर्जिह्वाघ्राण वाक्पाणिपादपायूपस्थविकाराः षोडशशक्तयःवचनादान-गमनविसर्गानन्दादानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोष्टौ अलम्बुषा-कुहूविश्वोदरीवरुणाहस्तिजिह्वायशस्विनी गान्धारीपूषासरस्वतीइडापिङ्गलासुषुम्नाचेतिचतुर्द्दशनाड्यः सर्व्वसङ्क्षोभिण्यादिचतुर्द्दशारदेवताः प्राणापानव्यानो-

दानसमाननागकूर्म्मकृकलदेवदत्तधनञ्जयादशवायवः सर्व्वसिद्धिप्रदादिबहिर्द्दशारदेवताः एतद्वायुदशकंससर्गोपाधिभेदेन रेचकपूरकपोषकदाहकाप्लावकामृतमिति प्राणमुख्यत्वेनपञ्चविधोस्ति जाठराग्निर्म्मनुष्याणाम्मोहकोभक्ष्यभोज्यलेह्यचोष्यात्मकञ्चतुर्व्विधमन्नम्पाचयति ॥ तदाकाशवान्सकलः सर्व्वज्ञत्वाद्यन्तर्द्दशारदेवताः शीतोष्णसुखदुःखेच्छासत्त्वरजस्तमोगुणादिवशिन्यादिशक्तयोष्टौशब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राःपञ्चपुष्पबाणाः मनइक्षुधनुर्व्वश्योबाणोरागःपाशोद्वेषोऽङ्कुशोऽव्यक्तमहत्तत्त्वाहङ्कारकामेश्वरी वज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणाग्रदेवताः पञ्चदशतिथिरूपेणकालस्यपरिणामावलोकनपञ्चदशनित्याशुद्धानुरूपाधिदेवतानिरुपाधिसार्व्वदेवकामेश्वरी सदानन्दपूर्णाः स्वात्म्यैक्यरूपललिता कामेश्वरीसदानन्दघनपूर्णाः स्वात्म्यैक्यरूपादेवताललितामिति साहित्यकरणं सत्त्वंकर्त्तव्यमकर्त्तव्यमितिभावनामुक्ताउपचारा अहन्त्वमस्तिनास्तिकर्त्तव्याकर्त्तव्यमुपासितव्यानुपासितव्यमिति विकल्पनामनोविलापनंहोमः बाह्याभ्यन्तरकरणानांरूपग्रहणयोग्यतास्तीत्यावाहनम् तस्यबाह्याभ्यन्तरकरणानामेकरूपविषयग्रहणमासनम् रक्तशुक्लपदैकीकरणम्पाद्यम् उज्ज्वलदामोदानन्दासनन्दनमर्घ्यम् स्वच्छास्वतः शक्तिरित्याचमनंचिच्चन्द्रमयीस्मरणंस्नानंचिदग्निस्वरूपपरमानन्दशक्तिस्मरणंवस्त्रं प्रत्येकंसप्तविंशतिधा भिन्नत्वेनइच्छायाक्रियात्मकब्रह्मग्रन्थिमयीसतन्तुब्रह्मनाडीब्रह्मसूत्रं सव्यातिरिक्तवस्त्रसङ्गरहितस्मरणंविभूषणम् स्वच्छन्दपरिपूर्णस्मरणङ्गन्धः समस्तविषयाणाम्मनः स्थैर्य्येणानुसन्धानङ्कुसुमन्तेषामेव सर्वदास्वीकरणन्धूपःपवनाच्छिन्नोर्ध्वज्वलासच्चिदाह्लादाकाशदेहोदीपः समस्तयातायातिवर्ज्जनन्नैवेद्यम् अवस्थात्रयैकीकरणन्ताम्बूलम् मूलाधारादोब्रह्मरन्ध्रपर्य्यन्तम्ब्रह्मरन्ध्रादोमूलाधारपर्य्यन्तङ्गतागतरूपेण प्रादक्षिण्यन्तुरीयावस्थानम् सँस्कारदेहशून्यप्रमादितावतिमज्जनम्बलिहरणम् सत्त्वमस्तिकर्त्तव्यमौदासीन्यमात्मविलापनंहोमः भावनाविषयाणाममेदभावनातर्प्पणम् स्वयन्तत्पादुकानिमज्जनम्परिपूर्णध्यानम् एवम्मूर्त्तित्रयभावनयायुक्तोमुक्तोभवतितस्यदेवतात्मैक्यसिद्धिचितिकार्य्याण्यप्रयत्नेनसिद्धयन्तिसएवशिवयोगीतिकथ्यते ॥ इतिषोडश्युपनिषत् समाप्ता ॥

## मुद्राप्रकरणम्

### श्रीगुरुवन्दनमुद्राः

विकसितकल्प उत्तानाञ्जलिः सुमुखम्। इदमेव मुष्टीकृतं सुवृत्तम्। ऊर्ध्वाधः स्थितयोः दक्षवामकरतलयोः अंगुलीनां मिथो मणिबन्धसम्बन्धे चतुरस्रम्। अधरोत्तरस्य वामदक्षमुष्टियुगस्य स्वाभिमुख्येन योजने मुद्गरः। तिर्यङ्मिळिताग्रयोः। मध्यमयोः पश्चात् ऊर्ध्वाधः स्थिते वामदक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामकनिष्ठां दक्षिणया धृत्वा अङ्गुष्ठाग्रयोः मध्यमापुरोमध्यपर्वद्वयसम्बन्धे योनिः॥ इति श्रीगुरुवन्दनमुद्राः॥

### सङ्क्षोभिण्यादिमुद्राः

उत्तानयोः करतलयोः प्रसारितर्जनीकं संहतकनिष्ठानामामध्यमाग्राण्यन्योन्याभिमुख्येन संयोज्य स्वस्वकनिष्ठोपर्यङ्गुष्ठाग्रसम्बन्धे सर्वसङ्क्षोभिणी। सैव प्रसारितमध्यमाऽपि सर्वविद्राविणी। इयमेव मध्यमातर्जन्योराकुञ्चने सर्वाकर्षिणी। परस्परग्रथिताङ्गुलिस्पृष्टनखाग्राङ्गुष्ठयोः मुष्ट्योः योगे सर्ववशङ्करी। अधरोत्तरं तिर्यक्प्रसारिते वामदक्षिणकनिष्ठे मध्यमाभ्यां धृत्वा तयोरग्रे अंगुष्ठाभ्यां निपीड्य अनामातर्जन्यग्राणां पार्श्वतो मिथः संस्पर्शे सर्वोन्मादिनी। एषैव अनामयोराकुञ्चने तर्जन्योः किञ्चित् सुग्नत्वे च सर्वमहाङ्कुशा। दक्षभुजमध्यसन्धिस्थापितवामकूर्परमामणिबन्धं पाणी परिवर्त्य स्वाभिमुखमन्योन्यस्पृष्टाग्रयोः मध्यमयोः पृष्ठतोऽधरोत्तरं तिरःप्रसारितानि दक्षवामानामाकनिष्ठाग्राणि तर्जनीभ्यां धृत्वा पुरोऽङ्गुष्ठयोरन्येन्यसम्बन्धे सर्वखेचरी। ऊर्ध्वाधस्तिरः प्रसृते वामदक्षकनिष्ठाग्रे अनामाभ्यां धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जुन्यङ्गुष्ठेषु मिथः श्लिष्टाभ्यामृजुभ्यां मध्माभ्यां तर्जुन्योः सम्बन्धे सर्वबीजम्। योनिरुक्तैव। अस्यामेव ऋजूकृतयोः कनिष्टयोः मध्यमयोरङ्गुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा। उदग्राणां विरळानां वामकराङ्गुलीनां ईषदाकुञ्चनेग्रासः। मध्यमातर्जन्यङ्गुष्ठयोगे प्राणमुद्रा। मध्यमानामाऽङ्गुष्ठमेळने अपानस्य कनिष्ठाऽनामाऽङ्गुष्ठसम्बन्धे व्यानस्य। तर्जन्यनामाऽङ्गुष्ठमिश्रणे उदानस्य।

सर्वाङ्गुलिसश्लेषे समागतस्य। वामपृष्ठेऽङ्गुष्ठाग्रचुम्बितमूलपर्वणि तर्जन्यामीषद्-धोमुखप्रसृतायां नाराचः। व्यत्ययेन वामदक्षकरकनिष्ठाङ्गुष्ठाग्रयोः योगे अन्यासां वैरळ्येन प्रसारणे च चक्रम् ॥

द्वितीयभागः ॥

बहिर्यागः ॥

षष्ठः खण्डः ॥

गुरुध्यानम् ॥ ओं गुरोः दक्षिणामूर्तये भक्तानुग्रहदामक।
अनुज्ञांदेहि भगवन्श्रीचक्रयजनायमे ॥

भैरवध्यानम् ॥ अतिक्रूरमहाकायकल्पान्तदहनोपमाभैरवायनमस्तुभ्यं अनुज्ञांदातुमर्हसि ॥ इति आज्ञालब्ध्वा ॥

दीपंप्रज्वाल्य ॥

द्वीपपूजा ॥ ४ रक्तद्वादशयुक्तायद्वीपनाथाय नमः ॥
इति द्वीपेपुष्पां जलिं दत्वा ॥
गुरुमन्त्रं अभ्यर्च्य ॥

४ समस्तप्रकट गुप्तगुप्ततर संप्रदायकुलकौल-निगर्भरहस्यातिरहस्य परापर रहस्य योगिनीचक्रदेवताभ्योनमः ॥ बिन्दुं अभ्यर्च्य ॥

४ श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवंसिद्धौघं वटुकत्रयं पदयुगं दूतिक्रमं मण्डलं वीराद्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं श्रीमन्मालिनि-मन्त्रराज सहितं वन्देगुरोर्मण्डलं वन्देगुरुपदद्वन्द्वमवाङ्मगोचरं रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरंमहः मध्यत्रिकोणस्य अग्रकोणे ॥

७ हंसश्शिवस्सोहं स्वरूपनिरूपणहेतवेकामेश्वरीअंबा समेत कामेश्वरानन्द-नाथ गुरुवेनमः मध्यत्रिकोणस्यवायुकोणेषु ॥

७ सोहंहंसश्शिवः स्वच्छप्रकाशविमर्श हेतवेउमादेवीअंबा समेत परमेश्वरा-नन्दनाथायपरमगुरुवे नमः। मध्यत्रिकोणस्यनैऋतिकोणेषु त्रिकोणस्यपश्चिमरेख-

मध्यान्तरे विमलाजयिन्योर्मध्ये अरुणावाग्देवता सन्निधौ दक्षिणोत्तरायतं रेखात्रयं विभाव्य दक्षिणसंस्थाक्रमेण दिव्यसिद्धमानवाख्ययोघत्रयं मुनिदेववसुसंङ्ख्यां समर्चयेत् ॥

७ हंसस्सोहंसोहंहंसश्शिवः स्वात्मारामपरमानन्द पञ्जरविलीनतेजसेऽमादेवी अंबासमेत सदाशिवानन्दनाथाय परमगुरवेनमः । उपरिप्रथमरेखायां ॥

७ हंसस्सोहं परमेष्टिगुरवेनमः । द्वितीयरेखायां

७ परापरगुरुभ्यो नमः । त्रितीयरेखायां ॥

७ श्रीललितामहात्रिपुरसुन्दर्यै नमः । बिन्दु इतिगुरमन्त्रैः अभ्यर्च्य ॥

अथश्रीचक्रंपुरतः प्रतिष्टाप्य ॥

पीठपूजां आरभेत् ॥ मूलम् कुशजलेनभूमिं शोधयेत् ॥

16

| | | | |
|---|---|---|---|
| ४ | प्र ललितामहात्रिपुरसुन्दर यै नमः ॥ | त्रिकोणस्य | अग्रकोणे ॥ |
| ४ | द्वि ,, | ,, | वायुकोणे ॥ |
| ४ | त्रि ,, | ,, | नैरृतिकोणे ॥ |

४ ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये नमः ॥

४ शं शरवणभव । सुब्रह्मण्यस्वामिने नमः ॥

४ ऐं क्लीं सौः सौ क्लीं ऐं । बालात्रिपुरसुन्दर्यै नमः ॥

४ ऐं ह्रीं श्रीं ॥ भुवनेश्वर्यै नमः ॥

७ मूलम श्रीललितामहात्रिपुरसुन्दरयै नमः ॥ *தீர்த்தத்தை ஸ்ரீ சக்ரத்தில் விடவும்.*

आधारशक्त्यैनमः । मूलप्रकृत्यैनमः । आदिकूर्मायनमः । अनन्ताय नमः । वराहाय नमः । कैलासगिरये नमः । सहस्रस्तंभमण्ठपाय नमः । रत्नसिंहासनाय नमः । श्वेतच्छत्राय नम । सितचामराय नमः । आत्मतत्वाय नमः । विद्यातत्वाय नमः । शिवतत्वाय नमः । ओंनमोभगवते सकलतत्वायशक्तियुक्ता अनन्तयोगपीठात्मने नमः । ह्रींसदाशिवाय नमः । पूर्व-

द्वारिद्वारश्रियै नमः । चिच्छक्तै नमः । मायायै नमः । दक्षिणद्वारिद्वारश्रियै नमः भद्राय नमः । सुभद्राय नमः । पश्चिमद्वारिद्वारश्रियै नमः । धात्रे नमः । विधात्रे नमः । उत्तरद्वारिद्वारश्रियै नमः । जयायै नमः । विजयायै नमः । उपरिद्वारिद्वारश्रियै नमः । नन्दाय नमः । सुनन्दाय नमः । ईशानादिकोणेषुः धर्माय नमः । अधर्माय नमः । ज्ञानाय नमः । अज्ञानाय नमः । वैराग्याय नमः । अवैराग्याय नमः । ऐश्वर्याय नमः । अनैश्वर्याय नमः । ओं आं आधारशक्तिकमलासनाय नमः ॥

४ कूं कूर्माय नमः । अं अनन्ताय नमः । प्रं पृथिव्यै नमः । रं रसांबुधे नमः । रं रत्नद्वीपाय नमः । नं नन्दनोद्यानाय नमः । रं रत्नमण्ठपाय नमः रं रत्नवेदिकाय नमः ॥

४ रं रत्नसिंहासनाय नमः श्रीचक्राय नमः ॥

ततः ४ ह्रीं इति मन्त्रेणपीठंविशोध्य ।

४ सां सरस्वत्यै नमः । लां लक्ष्मैनमः । शं शंखनिधये नमः । पं पद्मनिधये नमः ।

पीठस्योपरि । ४ आं आनन्दगन्दाय नमः ॥

४ सं संविन्नालाय नमः । सं सर्वतत्वात्मकापद्माय नमः । पं पंचाशद्वर्णाय नमः । विं विकारमयैकसरेभ्यो नमः । प्रं प्रकृतिमयपत्रेभ्यो नमः ॥

यन्त्रस्थापनम् । श्रीचक्रप्राणपतिष्टा ॥

ஸ்ரீ சக்ரத்துக்கு மஹாயந்த்ர ப்ராணபதிஷ்டா செய்து இருந்தால் இது செய்யவேண்டியது இல்லை.

अस्य श्रीयन्त्रराजप्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुस्सामाथर्वाणि छन्दांसि । चैतन्यं देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । मम श्रीचक्रप्राणप्रतिष्ठायै जपे विनियोगः ॥

ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अंगुष्ठाभ्यां नमः ॥

३ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः ॥

३ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः ॥

३ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः ॥

३ ओं पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः ॥

३ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तः करणात्मने अः करतलकरपृष्ठाभ्यां नमः ॥

एवं हृदयादिन्यासः ॥

ध्यानम्—

रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमळिगुणमप्यङ्कुशं पञ्चबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य प्राणाः इह प्राणाः ॥

३ ॐ .... सः श्रीचक्रस्य जीव इह स्थिताः ॥

३ ॐ .... सः श्रीचक्रस्य सर्वेन्द्रियाणिः ॥

३ ॐ .... सः श्रीचक्रस्य वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ इति ॥

113 & 116 பக்கங்களில் இருக்கும் வஹ்னிகலாதி ஸதாசிவ கலாந்தம் 88 கலைகளை ஸ்ரீசக்ரத்தில் ஆவஹநம் செய்தபிறகு 138 & 140 பக்கங்களில் இருக்கும் ஸ்ரீ சக்ரராஜ ஸ்தவமும் ஸ்ரீசக்ரராஜ ரதமும் படிக்கவேண்டியது:

श्रीचक्र प्राणप्रतिष्ठान्त। धूपं दीपं नैवेद्यं कर्पूरंच कृत्वा ॥

४ अं अग्निमण्डलायदशकलाय नमः ॥

४ अं सूर्यमण्डलायद्वादशकलाय नमः ॥

४ म सोममण्डलाय षोडशकलाय नमः ॥

४ सं सत्वायनमः। ४ रं रससेनमः। ४ तं तमसेनमः। ४ आं आत्मनेनमः। ४ अं अन्तरात्मनेनमः। ४ पं परमात्मनेनमः। ४ ह्रीं ज्ञानात्मनेनमः ॥

४ ऐं प्र कामगिरिपीठाय नमः ॥

४ क्लीं द्वि पूर्ण .... .... ....

४ सौ जालन्द्र .... .... ....

७ मूलम् महोड्याण .... ....

षडङ्गपूजा ॥

४ ऐं प्र ललितामहा मध्यम हृदया चतुरश्र वायुकोणे

४ क्लीं: द्वि त्रिपुरसुन्दरीं अनामि शिरसे .... नैर्ऋति

४ सौ: त्रि .... कनिष्टि शिखायै .... अग्नि

४ ऐं प्र .... अङ्गुष्टा कवचा .... ईशन

४ क्लीं द्वि .... तर्जनी नेत्र बिन्दु

४ सौ: त्रि .... करतल अस्त्राभ सर्वत्र

आसनम ॥

४ ह्रीं क्लीं सौ: श्रीदेव्यात्मा सनायनमः ॥ अग्रकोणे

४ है ह्क्लीं ह्सौ: श्रीचक्रा .... वायुकोणे

४ ह्रीं क्लीं ब्लें साद्ध्यसिद्धा .... नैर्ऋतिकोणे

४ है हसक्लीं ह्सौ: सर्वममन्त्रा .... बिन्दु

४ श्रीं ह्रीं सौः परमशिवज्योतिरभिन्न प्रकाशात्मकां स्वात्माभिन्नां परमाकाशस्वरूपिणीं श्रीललितामहात्रिपुरसुन्दरीं। ध्यात्वा ॥ इतिपुष्पांजलिं-विकीर्य त्रिकोणे ॥

४ समस्तप्रकटयोगिनीभ्यो नमः। संहारचक्रदेवताभ्ये नमः ॥ अग्नि-कोणे

४ अतिरहस्य परापररहस्यनिगर्भ कुलसंप्रदाय गुप्तगुप्ततरसमस्त-प्रकटयोगिनीभ्यो नमः। सृष्टिचक्रदेवताभ्यो नमः ॥ वायुकोणे

४ समस्त प्रकटगुप्तगुप्तरत सम्प्रदायपरापररहस्य निगर्यकुलोत्तोर्णयोगि-नीभ्यो नमः। स्थितिचक्रदेवताभ्यो नमः ॥ वायुकोणे

४ परापररहस्यादिरहस्यनिगर्भ कुरु संप्रदायगुप्तगुप्ततर समस्यप्रकट-योगिनीभ्यो नमः। समष्टिसंहारचक्रदेवताभ्यो नमः ॥ वायुकोणे

कलागिरुद्राष्टकं प्रपूजयेत् पश्चिमदिप्रादक्षिण्येत ॥

| | |
|---|---|
| ४ कं कालाग्निरुद्राय नमः ॥ | ४ कूं कूर्माय नमः ॥ |
| ४ मं मण्डूकाय ,, | ४ वं वराहाय ,, |
| ४ अं आधारशक्तै ,, | ४ दिं गजेभ्यो ,, |
| ४ अं अनन्तय ,, | ४ प्रं प्रदिव्यै ,, |

दिक्पतिपूजा ॥ पूर्वादिप्रादक्षिण्ये नमः ॥

दिक्पतिपूजा ॥

४ लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय श्रीललिता-महात्रिपुरसुन्दरी सपरिवाराय नमः। पूर्वे ॥

४ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय श्रीललिता-महात्रिपुरसुन्दरी सपरिवाराय नमः। आग्नेये ॥

४ टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः। दक्षिणे ॥

४ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः । नैर्ऋते ॥

४ वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः । पश्चिमे ॥

४ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः । वायव्ये ॥

४ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः । उत्तरे ॥

४ हां ईशानाय त्रिशूलहस्ताय विद्याधिपतये वृषभवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः । ऐशान्ये ॥

४ ॐ ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः । इति इन्द्रेशानयोः मध्ये ॥

४ श्रीं विष्णवे चक्रहस्ताय नागाधिपतये गरुडवाहनाय श्रीललिता महात्रिपुरसुन्दरी सपरिवाराय नमः । इति निर्ऋतिवरुणयोः दिगन्तरे ॥

४ ॐ वास्तुपतये ब्रह्मणे नमः । इति वास्तुनि चार्चयेत् ॥

अष्टाग्रेषु ॥

| | | | |
|---|---|---|---|
| ४ अं असितांग भैरवसमेत | अं क+ङं आं ब्राह्मी देवी श्री+नमः ॥ | | |
| ४ इं रुरु | ,, | इं चं+ञं ईं माहेश्वरी | ,, |
| ४ उं चण्ड | ,, | उं टं+णं ऊं कौमारी | ,, |
| ४ ऋं क्रोध | ,, | ऋं तं+नं ॠं वैष्णवी | ,, |
| ४ लृं उन्मत्त | ,, | लृं पं+मं ॡं वाराहि | ,, |
| ४ एं कपालि | ,, | एं यं+वं ऐं माहेन्द्री | ,, |
| ४ ओं भीषण | ,, | ओं शं+सं औं चामुण्डा | ,, |
| ४ अं संहार | ,, | अः हं+क्षं अः महालक्ष्मी | ,, |

